क्रूराश्रितफलं त्यक्त्वा शेषास्तुस्तात्मजाः स्मृताः ॥
व्ययार्थसुतसंस्थैश्च पापैः स्यात् क्षीणसंततिः ।
गुरोरष्टकवर्गेषु सुतराशिस्थितं समम् ॥
अल्पात्मजः स विज्ञेयो गुरौ पञ्चमगेऽपि वा ।
तदीशयोगदृष्टे वा तदा पुत्रान् समादिशेत् ॥
एतैर्बहुप्रकारैश्च कल्पयेत्कालवित्तमः ।
बहुलक्षणसंयोगे तदा तस्मिन् समादिशेत् ॥

जीवाष्टवर्गलघुबिन्दुगृहोपयाते
मानौ कृताखिलशुभानि विनाशितानि ।
पञ्चादिबिन्दुकरिपुव्ययरन्ध्रगेज्ये
जातश्चिरायुरतिवित्तजितारिकः स्यात् ॥ २४ ॥

*Sloka* 24. If, at a person's birth, the Sun occupies a house which in the Ashtakavarga of Jupiter gets the least number of benefic dots, the person born will be luckless in that every undertaking for his benefit will fail. If Jupiter occupying the 6th, the 12th or the 8th bhava be associated with 5 or more benefic dots, the person born will be long-lived, very opulent and victorious over his enemies.

स्वोच्चेऽथवा निजगृहे वसुबिन्दुयुक्ते
केन्द्रस्थिते सुरगुरौ शुभभावगे वा ।
नीचारिभागमपहाय विमूढराशौ
जातः स्वकीययशसा पृथिवीपतिः स्यात् ॥ २५ ॥

*Sloka* 25. If Jupiter, whether in exaltation, in स्वक्षेत्र (Swakshetra), in a Kendra, in the 9th bhava or in a portion of some राशि (Rasi) unconnected with the planet's depression or inimical house and not in eclipsing proximity to the Sun—if Jupiter in any one of the

positions above named be associated with 8 benefic dots, the person born will become a king by virtue of his own fame and glory.

यदा महीदेवकुलप्रजातास्तदीययोगे नरपालतुल्याः ।
कृतातिपुण्यप्रभवप्रसिद्धबुद्धिप्रतापादिगुणाभिरामाः ॥ २६ ॥

*Sloka* 26. When persons of Brahmanical extraction come under such a yoga of Jupiter as has been described in the preceding sloka, they become lords of great beneficence equal in status to kings and admired for their conspicuous intelligence, energy and other great qualities.

ससप्तबिन्दौ सह (शश?) लक्ष्मणेन जीवे बहुस्त्रीधनपुत्रवन्तः ।
षड्बिन्दुके वाहनवित्तवन्तः सपञ्चबिन्दौ जयशीलवन्तः ॥ २७ ॥

*Sloka* 27. If Jupiter in conjunction with the Moon becomes associated with 7 benefic dots in the positions referred to in sloka 25, the persons born under the yoga will have women, wealth and sons in abundance; if with 6 benefic dots, the persons concerned will have much wealth and many vehicles; if with 5 benefic dots, they will have victory and virtue.

## ॥ शुक्रफलम् ॥

साष्टबिन्दुफलकोणकेन्द्रगे भार्गवे तु बलवाहनाधिपः ।
आयुरन्तमविनाशभोगवान् वित्तरत्नविभुरद्रिबिन्दुके ॥ २८ ॥

*Sloka* 28. When Venus occupying a Trikona or Kendra position is associated with 8 benefic dots, the person born will be at the head of an army and transport animals; if Venus in the above position be associated with 7 benefic dots, the person born will be lord of

wealth and precious stones and have unfailing enjoyment up to the end of his life.

NOTES.

Parasara adds

भृगोरष्टकवर्गे च निक्षिप्याकाशचारिषु ।
त्रिकोणशोधनं कृत्वा पश्चादेकाधिपत्यताम् ॥
येषु येषु फलानि स्युर्भूयांसि किल तत्र तु ।
भूमिं कलत्रं वित्तं च तद्देशे निर्दिशेन्नृणाम् ॥
शुक्राज्जामित्रतो लब्धिर्दारेशान्वितदिग्भवा ।
दाराधिपस्थितं क्षेत्रं दाराजन्मर्क्षकं विदुः ॥
तस्योच्चनीचराशौ वा केचिदिच्छन्ति तद्विदः ।
तस्यांशकत्रिकोणे वा भार्याया जन्म संभवेत् ॥
लग्नेन्द्वोर्मार्गयभं जन्म वदन्ति मुनिसत्तमाः ।
उक्तप्रकारमार्गेण भार्याया जन्मलग्नभम् ॥
तयोः समागमर्क्षे च कल्पयेत्तत्र बुद्धिमान् ।
स्वक्षेत्रस्वोच्चगे वापि स्वमित्रर्क्षगतोऽपि वा ॥
स्वमित्रांशगतो वापि वक्तव्यं दारलक्षणम् ।
शुक्रजामित्रतो लब्धिस्त्रिकोणाद्देशादिकाः स्त्रियः ॥
प्रोक्तराशिर्यदा दारा जन्मर्क्षं संततिस्तदा ।
अनुक्तराशिर्जन्मर्क्षमस्ति चेन्नास्ति संततिः ॥
भृगुर्दारेशयुक्तर्क्षे फलमेव्यास्त्रियो विदुः ।
क्षेत्रस्त्रीग्रहणे साम्यं नृपस्य द्विगुणं तथा ॥
मन्दांशे मन्दसंयुक्ते मन्दक्षेत्रेऽथवा भृगौ ।
नीचांशे पापसंयुक्ते नीचस्त्रीभोगमिच्छति ॥
मेदिनीतनयभोगनिवासी मेदिनीभवसदालययुक्तः ।
मङ्गलेक्षणयुतः सितलग्नदास्यंगसुन्दरपराङ्गनारतः ॥
भौमांशकगते शुक्रे भौमक्षेत्रगतेऽपि वा ।

भौमेन युतदृष्टेश्च परस्त्रीभोगमिच्छति ॥
दारागारे मन्दभांशे कुजांशे मन्दाराभ्यां वीक्षिते यस्य पुंसः ।
स्यात्तद्दारा जारिणी चंचला वा वेश्या दासी स्वामिसंतोषनिघ्नी ॥
जामित्रे मन्दभौमांशे तद्दीशे मन्दभौमगे ।
वेश्या वा जारिणी वापि तस्य भार्या न संशयः ॥
पापारूढांशगे चन्द्रे जामित्रे व्ययगेऽपि वा ।
पापग्रहान्विते शुक्रे स्त्रीहेतोः शुचमावहेत् ॥
शुक्रांशकसमाना स्त्री वर्णरूपगुणान्विता ।
भवेच्छशाङ्कतुल्या वा दारेशस्य गुणान्विता ॥
सपापभागगे विधौ व्ययेऽङ्गनालयेऽपि चेत्
*सपापमार्गेऽङ्गनानिमित्ततः शुचां पदम् ।*
सितांशकप्रमाणिकाः स्त्रियो भवन्ति सद्गुणाः
भवेश्वरांशसंमिताः स्वनाथतुल्यसद्गुणाः ॥
शुक्रान्मन्दे त्रिकोणस्थे नेष्टं जीवे सुखप्रदम् ।
तेषां बलाबलत्वेन भार्याया लक्षणं वदेत् ।
एवमादिफले ज्ञात्वा निर्दिशेच्छुक्रवर्गतः ॥

**नीचास्तरिःफनिधनोपगते तु काव्ये**
**पूर्वोदितक्षितिपयोगविनाशनं स्यात् ।**
**शुक्राल्पबिन्दुयुतमन्दिरदिग्विभागे**
**स्त्रीवश्यहेतुशयनीयगृहं प्रशस्तम् ॥ २९ ॥**

*Sloka* 29. But if Venus be in depression or occupy the 7th, the 12th or the 8th bhava, the aforesaid राजयोग (Rajayoga) will be destroyed; in the direction indicated by the house with the least number of benefic dots in the शुक्राष्टकवर्ग (Sukrashtakavarga), it is best to have the chamber which is to contain the bed by means whereof women are to be won and kept in willing bondage.

## शनिफलम्

कोणस्य शून्यतरराशिगते तु मन्दे
जातस्य मृत्युफलमाशु धनक्षयो वा ।
एकद्वित्रिलोकयुगबिन्दुयुते च केन्द्रे
मुक्तः स्वतुङ्गभवने रविजेऽल्पमायुः ॥ ३० ॥

*Sloka* 30. If in the अष्टकवर्ग (Ashtakavarga) of Saturn, there be a sign thoroughly void of benefic dots, the person born will meet with death or sustain loss of wealth when the planet passes through the sign in question; if the planet occupying a Kendra be associated with one, two, three or four benefic dots and if the Kendra be the planet's exaltation sign, any child delivered from the womb at such a time will be short-lived.

NOTES.

Parasara adds

शनैश्चरस्थितस्थानादष्टमं मृतिरुच्यते ।
शनेरष्टकवर्गे च तस्यायुष्यं विनिर्दिशेत् ॥
लग्नात्प्रभृतिमन्दान्तं फलान्यैक्यस्य कारयेत् ।
लग्नादिफलतुल्याब्दे व्याधिवैरं समादिशेत् ॥
मन्दादिलग्नपर्यन्तं फलान्यैक्यस्य संयुतम् ।
मन्दादिफलतुल्याब्दे व्याधिं तस्य समादिशेत् ॥
तयोर्योगसमाब्दे तु मृत्युयोगः प्रवर्तते ।
शोध्यादिगुणनं कृत्वा पिण्डं संस्थाप्य यत्नतः ॥
अष्टमस्थफलैर्हत्वा सप्तविंशतिभाजितम् ।
शतादूर्ध्वं तु तत्पिण्डं शतमेव त्यजेद्बुधः ॥
आयुःपिण्डं तु जानीयात् भावच्छेदं तु कल्पयेत् ।
त्रिकोणैकाधिपत्यसंशोधनं विरचय्य च ॥

पिण्डं संस्थाप्य गुणयेल्लग्नादष्टमगैः फलैः ।
सप्तविंशतिहृच्छेषं मृत्युकालं वदेद्बुधः ॥
समूलाष्टकवर्गे च यत्र नास्ति फलं गृहे ।
तत्र नास्ति फलं तस्य यदा याति शनैश्चरः ॥
तद्गृहे रविचन्द्रौ चेत् दशाच्छिद्रे मृतिं वदेत् ।
दशाच्छिद्रसमायोगे मृत्युरेव न संशयः ॥
मन्दाष्टवर्गराशीनां हीनराशौ क्षयो भवेत् ।
तद्गृहे भास्करे मन्दे तस्मिन् काले मृतिं वदेत् ॥

मन्दाष्टवर्गादथ रिष्टयोगे दुष्टानि वर्षाणि विचारयन्ति ।
पूर्वोक्तसंशोधनतो हि शुद्धं पिण्डं सुधीमान्विलिखेत्पृथक्स्थम् ॥
लब्धास्तु मन्दान्तमपोफलानामैक्यं शनेर्लभ्रमुपान्त्यमेव ।
तद्योगतुल्ये शरदीह काले व्याधिं मृतिं वा परदेशयानम् ॥
धनक्षयं तत्प्रतितुल्यवर्षे तद्योगयोगाब्दसमे तु कष्टम् ।
सामर्थ्यहीनग्रहपाककाले प्राप्ते तदा निश्चयतो मृतिः स्यात् ॥

**षट्पञ्चबिन्दुसहिते तनुगे बलाढ्ये**
**जन्मादिदुःखविपुलं धननाशमेति ।**
**मन्दे शरादिफलनीचसपत्नभावे**
**जातश्चिरायुरतिशोभनवर्गकेन्द्रौ ॥ ३१ ॥**

*Sloka* 31. When Saturn with abundant strength occupies the 1st bhava and is associated with 6 or 5 benefic dots, the person born will sustain loss of wealth accompanied by much suffering from his very birth. If the planet in depression or in an inimical house be *associated with 5 or more benefic* dots and if the Moon occupies an auspicious Varga, the person will have long life.

मूढारिनीचगृहगे शरवेदबिन्दौ
दास्युष्ट्रवित्तसहितास्तनये तनुस्थे ।
सौरेऽष्टबिन्दुगणिते पुरमन्त्रतन्त्र-
ग्रामाधिपास्तु गिरिबिन्दुगृहे धनाढ्यः ॥ ३२ ॥

*Sloka* 32. When Saturn occupying the 5th or the 1st bhava is in an eclipsed state or in the house of an enemy or in depression and is associated with 5 or 4 benefic dots, the persons born under the above yoga will be possessed of female slaves, camels and property. If Saturn in the same position be associated with 8 benefic dots, the persons born will be lords of townships, possessed of administrative machinery characteristic of cities; if the number of benefic dots be 7, the persons affected by the yoga will possess abundant wealth.

## ॥ प्रस्ताराष्टकवर्गः ॥

आलिख्य चक्रं नवपूर्वरेखा याम्योत्तरस्था दश च त्रिरेखाः ।
प्रस्तारकं षण्णवतिप्रकोष्ठं पङ्क्त्यष्टकस्याष्टकवर्गजं स्यात् ॥ ३३ ॥

*Sloka* 33. If you draw up a diagram consisting of 9 parallel lines at equal intervals from East to West crossed by 13 parallel lines from North to South with the same intermediate space as before, there will arise a table containing 96 squares in 8 rows comprising the results of each of the several Ashtakavargas.

होराशशीशोधनशुक्रसूर्यभौमामरेन्द्रार्चितभानुपुत्राः ।
याम्यादिपङ्क्त्यष्टकराशिनाथाः क्रमेण तद्बिन्दुफलप्रदाः स्युः ॥

*Sloka* 34. The Lagna, the Moon, Mercury, Venus, the Sun, Mars, Jupiter and Saturn are the lords of the divisions indicated in the 8 rows extending from South

**to North of each sign and yield, every one of them, the benefic dots appearing in the 12 houses of its row.**

NOTES.

Note that the planets here have been mentioned in the order of their orbits round the Zodiac.

Let us now draw the प्रस्तारष्टकवर्ग (Prastharashtaka Varga) Table and set therein the benefic dots for the Sun's Ashtakavarga in the sample horoscope referred to in page 657 *supra*.

*The 48 benefic dots will be distributed as shown below :*

There are three benefic dots in Mesha, and it will be seen that these have been contributed by the Sun, Mercury and the Lagna. While the other five planets have each contributed a malefic one.

When the Sun transits through the sign Mesha, he will give benefic results only during three periods *viz*., the 4th, the 6th and the 8th portions, that is when he is passing from (1) $11\frac{1}{4}°$ to $15°$ (2) $18\frac{3}{4}°$ to $22\frac{1}{2}°$ and (3) $26\frac{1}{4}°$ to $30°$ of that sign; the remaining five periods will prove malefic. Similarly in the case of the rest.

| | Mesha | Vrishabha | Mithuna | Kataka | Simha | Kanya | Tula | Vrischika | Dhanus | Makara | Kumbha | Meena |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| Saturn | | 1 | | | 1 | 1 | 1 | 1 | 1 | | 1 | 1 |
| Jupiter | | | 1 | | 1 | | | | | | 1 | 1 |
| Mars | | 1 | 1 | 1 | 1 | 1 | | 1 | 1 | | 1 | |
| Sun | 1 | 1 | | 1 | 1 | | 1 | | | 1 | 1 | 1 |
| Venus | | 1 | | | | | | 1 | 1 | | | |
| Mercury | 1 | 1 | | | 1 | | 1 | 1 | | | 1 | 1 |
| Moon | | 1 | | | 1 | | | | 1 | 1 | | |
| Lagna | 1 | 1 | | | 1 | 1 | | 1 | | | | 1 |
| | =3 | =7 | =2 | =2 | =7 | =3 | =3 | =5 | =4 | =2 | =5 | =5 |

*cf.* फलदीपिका

बिन्दौ स्थिते तत्फलसिद्धिकालविनिर्णयाय ग्रहितेऽष्टवर्गे ।
मान्यष्टधा तत्र विभज्य कक्षाक्रमेण तेषां फलमाहुरन्ये ॥
राश्यष्टभागप्रथमांशकाले शनिर्द्वितीये तु गुरुः फलाय ।
कक्षाक्रमेणैवमिहान्त्यभागकाले विलग्नं फलदं प्रदिष्टम् ॥
सर्वग्रहाणां ग्रहितेऽष्टवर्गे तत्कालराशिस्थितबिन्दुयोगे ।
अष्टाधिसंख्याधिकबिन्दवश्चेच्छुभं तदूने व्यसनं क्रमेण ॥

सबिन्दुगः सर्वफलप्रदः स्यादबिन्दुको यच्चफलप्रदाता ।
अरातिनीचास्तगतो नभोगः सबिन्दुकोऽपि प्रविलापकर्ता ॥ ३५ ॥

*Sloka* 35. If a planet be associated with benefic dots, it produces its full beneficial effect; if it be not connected with benefic spots, there is no beneficial effect produced; a planet in its depression or inimical sign or in an eclipsed state causes sorrow even if it be associated with benefic dots

## ॥ त्रिकोणशोधना ॥

पञ्चप्राचीरालिखेद्याणसंख्यास्तिर्यग्रेखा वर्जितान्तश्चतुष्काः ।
प्रागादीश्चाद्यन्योमवासा ज्योतिश्चक्रस्वामिनस्त्वाराद्याः ॥ ३६ ॥

*Sloka* 36. Draw five parallel straight lines at equal intervals from East to West; and across these lines draw five others with the same intermediate space, in such a manner that the four inner squares (out of the 16 resulting ones) should appear omitted. You have in the diagram the 12 celestial signs that rule over the East and other quarters and are the owners (jointly) of the starry zodiac.

अजहरितुरगाङ्गैरुक्षकन्यामृगास्यै-
र्युगघटघटरूपैः कर्किकीटावसानैः ।

दिनकरमुखवर्गे तत्त्रिकोणोपयाता
लघुतरसमशून्या बिन्दवः शोधिताः स्युः ॥ ३७ ॥

*Sloka* 37. In the Ashtakavarga of any one of the Sun and other planets, take the signs by the triangular groups (1) *Mesha, Simha, Dhanus* (2) *Vrishabha, Kanya,* Makara (3) Mithuna, Tula, Kumbha (4) Kataka, Vrischika, Meena; and *examine the benefic dots in the 3 signs* composing any group. If in any one sign of a group, the number of benefic dots be less than that in each of the remaining two, or equal to that in each of the other two, or be zero, the same will have to be subtracted from the number of benefic dots in each of the three signs of the group chosen.

त्रिकोणभावेषु यदल्पबिन्दुकस्तदीयबिन्दू भवतस्तु तावुभौ ।
न बिन्दुको यस्तु न शोधितेतरौ समानसंख्या यदि सर्वमुत्सृजेत् ॥

*Sloka* 38. If a sign in a triangular group has the least number of benefic dots, the other two signs must have their benefic dots altered into this least number. If a sign have no benefic dots, the remaining signs of the same group will keep their figures unaltered. If all the signs of a triangular group have the same number of benefic dots, they must all be removed (*i e.* replaced by zeros)

NOTES.

*cf.* पराशर

त्रिकोणेषु च यन्न्यूनं तत्तुल्यं त्रिषु शोधयेत् ।
एकस्मिन् भवने शून्ये तत्त्रिकोणं न शोधयेत् ॥
समत्वे सर्वगेहेषु सर्वं संशोधयेत्तदा ।

To this मन्त्रेश्वर adds in his फलदीपिका

भवनद्वयशून्ये तु शोधयेदन्यमन्दिरम् ॥

The two slokas represent the opposite views of two distinct schools. The conflicting views rest on two distinct interpretations put upon the sloka enunciating the rule for त्रिकोणशोधना (Trikonasodhana). "त्रिकोणेषु च यन्न्यूनं तत्तुल्यं त्रिषु शोधयेत्" which when translated will stand thus:—When one of three triangular houses contains the least number of benefic dots the same is to be subtracted from the figure in each of the triangular group. This rendering is not accepted by some who maintain that "तत्तुल्यं त्रिषु शोधयेत्" means that the figures in the three signs of a triangular group are to be altered so as to equal the least number. The latter view is advanced by बलभद्र (Balabhadra) and appears to be current in Southern India.

For the example referred to in sloka 34 above, the subjoined charts show the Suryashtakavarga figures before and after Trikona reduction:

| | | | |
|---|---|---|---|
| 5 | 3 | 7 | 2 |
| 5 | Ashtakavarga of the Sun. 48. | | 2 |
| 2 | | | 7 |
| 4 | 5 | 3 | 3 |

| | | | |
|---|---|---|---|
| 2 | 3 | 2 | 2 |
| 2 | After Trikona Sodhana | | 2 |
| 2 | | | 3 |
| 3 | 2 | 2 | 2 |

## ॥ एकाधिपत्यशोधना ॥

कण्ठीरवं कटकभं च विना कुजादि-
कावासराशियुगलोपगबिन्दुसंख्याः ।
तत्तुल्यशून्यविषमाग्रहसग्रहाद्या-
स्त्वेकाधिपत्यपरिशोधितशेषिताः स्युः ॥ ३९ ॥

*Sloka* 39. Leave out the signs Simha and Kataka. The figures in the five pairs of the remaining signs belonging to the five planets reckoned from Mars,

whether alike or unlike, represented by zero, associated with planets or not associated with them, have to be subjected to the process of the reduction styled एकाधिपत्यशोधना (Ekadhipatyasodhana), and their net value obtained.

*cf.* पराशर

एवं त्रिकोणं संशोध्य पश्चादेकाधिपत्यता ।
क्षेत्रद्वयं फलानि स्युस्तदा संशोधयेद्बुधः ॥
क्षीणेन सह चान्यस्मिन् शोधयेद्ग्रहवर्जिते ।
ग्रहयुक्ते फले हीने ग्रहाभावे फलाधिके ॥
अनेन सह चान्यस्मिन् शोधयेद्ग्रहवर्जिते ।
फलाधिके ग्रहैर्युक्ते चान्यस्मिन् सर्वमुत्सृजेत् ॥
उभयोर्ग्रहसंयुक्ते न संशोध्यः कदाचन ।
उभयोर्ग्रहहीनाभ्यां समत्वे सकलं त्यजेत् ॥
सग्रहाग्रहतुल्यत्वात् सर्वं संशोध्यमग्रहात् ।
कुलीरसिंहयो राश्योः पृथक् क्षेत्रं पृथक् फलम् ॥

**राशिद्वयं सद्युचरं न शोधयेदेकं द्वयोः शून्यभमप्यशोधयेत् ।**
**फलाधिके खेटयुते परं त्यजेत् तुल्या नभोगद्वितयं परित्यजेत् ४०**

*Sloka* 40. If the two Rasis having a common lord be both *occupied* by planets, no reduction need be made. If one of the two Rasis (whether occupied or unoccupied) have no benefic dots, then also there is no reduction. If one of the two Rasis be occupied and contain more benefic dots than the other, *remove the* figure in the latter. If both the Rasis be unoccupied and have the same number of benefic dots, remove both.

**सखेचराखेचरार्थबिन्दुसाम्ये विशोधयेदग्रहार्थबिन्दुसंख्याम् ।**
**विखेटराशिद्वयबिन्दवो ये न्यूनाधिका न्यूनसमा विधेयाः ४१**

*Sloka* 41. When one of the two Rasis is occupied

by a planet and the other not, and both have the same number of benefic dots, remove the figure in the unoccupied Rasi. If both the Rasis be unoccupied and have an unequal number of benefic dots, the greater figure is to be replaced by the less.

खेटोपयाते लघुबिन्दुराशौ तत्तुल्यमायान्ति तदन्यसंख्याः ।
पूर्वं त्रिकोणं परिशोध्य पश्चादेकाधिपत्यस्य ततः प्रकल्प्याः ४२

*Sloka* 42. When only one of the two Rasis with a common lord is occupied by a planet and has a smaller number of benefic dots than the unoccupied Rasi, the figure in the latter is to be made equal to the former. The Trikona reduction is to be made first of all; the net figures are then to be subjected to the एकाधिपत्य (Ekadhipatya) reduction.

शोध्यावशिष्टानि गुणीकृतानि मेषादिमानैर्गुणकं हि भानाम् ।
सूर्यादिकास्ते गुणिताः स्वमानैरेषां ग्रहाणां गुणकं वदन्ति ॥ ४३ ॥

*Sloka* 43. The net figures after the two reductions in the several signs are to be multiplied each into its राशिमान (Rasimana), *i.e.* Rasi factor; and the products made into a total is called राशिगुणक (Rasigunaka) *i.e.* the sum of the Rasi-products. The net figures associated with the Sun and other planets in the several signs are to be multiplied each into its appropriate planetary factor or ग्रहमान (Grahamana). The total of these products is called ग्रहगुणक (Grahagunaka), *i.e.* total of Graba products.

शैलाशावसुसागराम्बरशरैः शैलाहिगोसायकै-
रीशद्वादशभिश्च राशिगुणकैर्मेषादिमानां क्रमात् ।
बाणैः पञ्चभिरष्टकैः शरनभःशैलेषुभिर्भास्करा-
देवं व्योमतलाधिवासगुणकैरायुर्विधानोदितैः ॥ ४४ ॥

तद्राशिखेटगुणकैक्यफलानि हृत्वा
त्रिंशद्भिरब्दचयमासदिनादिकाः स्युः ।
तद्द्वादशाधिकसमा यदि राशिमानै-
राहृत्य तत्समतयाऽनुहरेत्तदायुः ॥ ४५ ॥

*Slokas* 44 & 45. Ascertain the sum-total of the Rasi products obtained by multiplying the figures in the several signs from Mesha onwards by their appropriate Rasi-multipliers. These for the 12 signs from Mesha onwards are 7, 10, 8, 4, 10, 5, 7, 8, 9, 5, 11 and 12. Ascertain also the *sum-total of the Graha products* obtained by multiplying the figures in the signs occupied by the several planets into their appropriate Graha multipliers. These for the 7 Grahas from the Sun onwards are 5, 5, 8, 5, 10, 7 and 5. Add the aggregate of Rasi products to the aggregate of Graha products. Divide the grand total by 30. If the quotient should exceed 12 years, divide it by 13 and what is left exhibits the Ayus or period of life given by the planet.

NOTES.

*cf.* पराशर

शोध्यावशेषं संस्थाप्य राशिमानेन वर्धयेत् ।
ग्रहयुक्तेऽपि तद्राशौ ग्रहमानेन वर्द्धयेत् ॥
गोसिंहौ दशगुणितौ वसुभिर्मिथुनालिनौ ।
वणिग्मेषौ तु मुनिभिः कन्यकामकरौ शरैः ॥
शेषाः स्वमानगुणिता राशिमाना इमे क्रमात् ॥
जीवारशुक्रसौम्यानां दशवसुमुनीन्द्रियैः क्रमाद्गुणकाः ।
ध्रुवस्य संख्या शेषाणां ग्रहगुणैर्गुणयेत् पृथक् पृथक् कार्याः ॥
निक्षिप्याष्टकवर्गं तु राशिचक्रे तु पूर्ववत् ।

त्रिकोणैकपशुद्धिं च कृत्वा तु गुणयेद्गुणैः ॥
सप्तन्हिभक्तमन्दाद्याः क्रमाद्भिन्नाष्टवर्गजाः ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 2 | 2 | 0 | 2 | 24 | 14 | 0 | 16 |
| 2 | Sun's A. V. After Ekadhipatya reduction Slokas 39-42 | | 2 | 22 | Sun's A V. After Rasi-Gunakara (Sl. 44-45.) Rasi Gunaka =162. | | 8 |
| 0 | | | 3 | 0 | | | 30 |
| 2 | 2 | 2 | 0 | 18 | 16 | 14 | 0 |

Similarly the Graha Gunaka will be 90, [composed of 10+14 for Mercury and Venus in Mithuna, 10 for the Sun in Kataka, 20 for Jupiter in Tula, 16 for Mars in Vrischika, 10 for Saturn in Kumbha and 10 for the Moon in Meena.]

The sum of Rasi Gunaka and Graha Gunaka is 162+90 or 252.

The Ayus contributed by the Sun is $\frac{252}{30}$ or $8\frac{2}{5}$ years. Similarly for the other planets.

But both बलभद्र (Balabhadra) and मन्त्रेश्वर (Manthreswara) prescribe a method different from this for calculating the भिन्नाष्टकवर्गायुर्दाय (Bhinnashtakavargayurdaya).

एवं गुणित्वा संयोज्य सप्तभिर्गुणयेत् पुनः ।
सप्तविंशतिहृताल्लब्धवर्षाण्यत्र भवन्ति च ॥
द्वादशाद्गुणयेल्लब्धमासाद्यनाडिकाः क्रमात् ।
सप्तविंशतिवर्षाणि मण्डले शोधयेत्पुनः ॥

Multiply the sum total of the two products (*viz.*, those for Rasi and Graha) by 7 and divide the product by 27. The quotient will be in years, months, etc. When the number of years thus obtained exceeds 27, subtract from it 27 or multiples of 27. The result will be the Ayus given by the planet when not liable to the reductions to be mentioned at the foot-note to the next sloka.

उच्चं गतस्य द्विगुणं तदीयं नीचं गतस्यास्तगतस्य चार्द्धम् ।
अतोऽन्तराले त्वनुपातमायुरारस्य वक्रे द्विगुणीकृतं स्यात् ॥ ४६ ॥

*Sloka* 46. If a planet be in its exaltation, double the number of years obtained for it by the Ashtakavarga process If it be depressed or eclipsed, the number of years in its case is to be halved. Obtain by proportion the Ayus when the planet occupies an intermediate *position* In the case of Mars when retrograde, the Ayus obtained is to be doubled.

NOTES.

Compare what मन्त्रेश्वर & वराहभद्र say on the subject :

अन्योन्यमर्द्धहरणं ग्रहयुक्ते तु कारयेत् ।
नीचेऽर्द्धमस्तगेऽप्यर्द्धहरणं तेषु कारयेत ॥
शत्रुक्षेत्रत्रिभागोनं दृश्यार्द्धहरणं तथा ।
हरणं ष्व्यंशोनमर्केन्द्वोः पातसंश्रयणादपि ॥
बहुत्वे हरणे प्राप्ते कारयेद्बलवत्तरम् ।
पश्चात्तान् सकलान् कृत्वा वेदाङ्गेन विवर्द्धितम् ॥
मातङ्गलब्धं शुद्धायुर्भवतीति न संशयः ।,
पूर्ववद्दिनमासाब्दं कृत्वा तस्य दशा भवेत् ॥
एवं ग्रहाणां सर्वेषां दशां कुर्यात् पृथक् पृथक् ।
अष्टवर्गदशामार्गः सर्वेषामुत्तमोत्तमः ॥

The Ayus obtained is to be halved when the planet yielding the Ayurdaya has another planet associated with it in the same bhava. The same reduction is to be made when a planet is depressed or obscured by the Sun's rays. If the planet occupy an inimical house or be in the visible hemisphere, the reduction is by ⅓. *When the Sun and the Moon being in the nodes suffer eclipse, the reduction* is also by ⅙. Where several reductions crop up, it will be enough if the greatest of them be made. The net years, months, &c. thus obtained is to be multiplied by 324 and divided

by 365. The life-period will be obtained in years (of 365 days) months, etc. In this way, ascertain severally the Dasa periods of all the planets. The Ashtakavarga process is the best of all.

मूलत्रिकोणनिजमित्रगृहोपगानां
तुङ्गादिवर्गशुभयोगनिरीक्षितानाम् ।
उक्तप्रकारगणितागममायुरेव
पापारिवर्गसहितस्य विपातमायुः ॥ ४७ ॥

*Sloka* 47. In the case of planets that have attained their मूलत्रिकोण, स्वक्षेत्र (Moolatrikona, Swakshetra) or a friendly house or occupy such benefic vargas as their exaltation, and are in conjunction with benefic planets or are aspected by them, the Ayus is to be calculated in the manner prescribed above. When a planet is in the varga of a malefic or inimical planet the Ayus arrived at must undergo reduction.

रविमुख्यनभोगदत्तसंख्याः परमायुः शरदस्तु मानवानाम् ।
सविलग्नसमाश्च केचिदाहुर्गुरुमूलात् समुपैति तुल्यमायुः ॥ ४८ ॥

*Sloka* 48. The number of years representing the maximum period of life in the case of men is obtained by putting together the figures denoting the years given by the Sun and other planets. These latter, some say upon the authority of great teachers (like पराशर-Parasara) should be supplemented by the number of years for the Lagna (deduced from the Lagna ashtakavarga) in order to get the Ayus conformably with the conditions of any horoscope that may be under examination.

NOTES.

The following slokas from पराशर (Parasara) give the details of the लग्नाष्टवर्ग (Lagnashtakavarga).

अथ स्थाने प्रवक्ष्यामि लग्नस्य द्विजपुङ्गव ।

आर्किज्ञशुक्रगुर्वाराः सौम्यदेवेज्यभार्गवाः ॥
हित्वा सौम्यगुरू शेषाः सुरेज्यभृगुसूर्यजाः ।
तथा जीवभृगू बुद्धौ सर्वे शुक्रं विना क्षते ॥
जीव एकस्तथा द्यूने मृतौ सौम्यभृगू तथा ।
धर्मे गुरुसितौ सर्वे खे चाये शुक्रमन्तरा ॥
सूर्यचन्द्रौ तथा रिःफ स्थाने लग्नस्य कीर्तितम् ।

## ॥ लग्नरेखाचक्रम् ॥

## LAGNAREKHA CHAKRAM.

| भाव | र | च | कु | बु | गु | शु | श | लग्न | योगः |
|---|---|---|---|---|---|---|---|---|---|
| 1 | | | । | । | । | । | । | | 5 |
| 2 | | | | । | । | । | | | 3 |
| 3 | । | । | । | | | । | । | । | 6 |
| 4 | । | | | । | । | । | । | | 5 |
| 5 | | | | | । | । | | | 2 |
| 6 | । | । | । | । | । | | । | । | 7 |
| 7 | | | | | । | | | | 1 |
| 8 | | | | । | | । | | | 2 |
| 9 | | | | | । | । | | | 2 |
| 10 | । | । | । | । | । | | । | । | 7 |
| 11 | । | । | । | । | । | | । | । | 7 |
| 12 | । | । | | | | | | | 2 |

In the Lagna Ashtakavarga, the benefic places of the Lagna are the 3rd, 4th, 6th 10th, 11th and 12th houses from the Sun *the 3rd, 6th, 10th, 11th and 12th houses from the Moon*; the 1st, 3rd, 6th, 10th and 11th houses from Mars; the 1st, 2nd, 4th, 6th,

8th, 10th and 11th houses from Mercury; the 1st, 2nd, 4th, 5th, 6th, 7th, 9th, 10th and 11th houses from Jupiter; the 1st, 2nd, 3rd, 4th, 5th, 8th and 9th places from Venus; the 1st, 3rd, 4th, 6th, 10th and 11th places from Saturn: and lastly, the 3rd, 6th, 10th and 11th places from itself.

केन्द्रादन्यगते चन्द्रे सखेटे चाष्टवर्गजम् ।
आयुरेव नभःस्थाने शुभपापयुतेऽथवा ॥ ४९ ॥

*Sloka* 49. When the Moon occupies any bhava other than a Kendra and is in conjunction with another planet, it is the Ashtakavargayurdaya that should be calculated. The same Ayurdaya is appropriate when the 10th bhava is occupied by benefic and malefic planets.

रव्यादिखेटस्थितराशियाताः स्वकीयवर्गोपगबिन्दुसंख्याः ।
वेधाष्टवर्गप्रभवायुरब्दा भवन्ति सर्वे हरणक्रियाश्च ॥ ५० ॥

*Sloka* 50. The figures indicating benefic dots that appear in the signs occupied by the Sun and other planets in any भिन्नाष्टवर्ग (Bhinnashtakavarga) when put together represent the number of years of Ayurdaya arising from that Bhinnashtakavarga subject to the reductions mentioned already.

NOTES.

The total of the net Ayurdayas in the 7 Bhinnashtakavargas is the length of life, according to the view expounded in this sloka.

## ॥ मन्दवैनाशिकनक्षत्राणि ॥

स्वस्वकक्ष्यगतबिन्दुगुणितं शोध्यावशिष्टं फलं
विंशत्यासहितसप्तभिश्च विहृतं तच्छेषतारायनी ।
तातस्तज्जननी सहोदरजनो बन्धुः सुतः स्त्री स्वयं
तत्तुल्या विलयं प्रयान्ति विपुलश्रीनाशहेतुश्च वा ॥ ५१ ॥

*Sloka* 51. In the Ashtakavarga of any planet, make the two *reductions and multiply* the total of the remaining benefic dots into the number of benefic dots (before reduction) in the particular bhava whereof the planet is कारक (Karaka,) reckoned from the place occupied by the planet. Divide the product by 27 and ascertain the asterism corresponding to the remainder. When Saturn passes through this asterism, death will take place of the person indicated by the bhava and its कारक (Karaka). If the Sun be the भावकारक (bhavakaraka), it is the father that will die; if the Moon, the mother; if Mars, a brother; if Mercury, a relation; if Jupiter, a son; if Venus, a wife; if Saturn, it is the owner of the horoscope that will die; *if at the time mentioned, the* persons named do not die, some others on a par with them will die or much wealth and prosperity will be lost.

NOTES.

Thus, in the example in p. 657, the 9th house counted from the Sun is Meena. The figure there in the Sun's Ashtakavarga is 5 (*vide* chart in p. 686). The sum total of the benefic dots remaining after the two reductions is 19 (see p. 690). Multiplying 5 by 19 and dividing by 27 we get 14. The 14th star counted from Aswini is चित्रा (Chithra). When Saturn passes through this asterism, *we have to say that the father of the native or some* others on a par with him may die or much wealth and prosperity may be lost.

## ॥ अथ समुदायाष्टवर्गः ॥

ततः समालिख्य भगोलचक्रं समस्तबिन्दुस्थितिराशिकोष्ठम् ।
रव्यादिकानामजपूर्वकाणां बिन्दूपगस्थानफलं वदामि ॥ ५२ ॥

*Sloka* 52. Draw up a diagram of the zodiac exhibiting in its several houses the aggregate benefic dots

given by the Sun and other planets and arranged appropriately in Mesha and the other Rasis. I shall now proceed to treat of the effect upon each bhava of the benefic dots grouped in it.

NOTES.

The following 2 mnemonic slokas from (मन्त्रेश्वर) Manthreswara's फलदीपिका (Phaladeepika) give the aggregate of the benefic dots appearing in the 12 places with reference to the seven planets and the lagna in the several Ashtakavargas. The order of the planets is from the Sun onwards, and Lagna appears as the 8th.

The figures are indicated by the convention commonly called कटपयादिसंख्या (Katapayadhisankhya) given below: (1) कादिनव (Kadinava), (2) टादिनव (Tadinava), (3) पादिपञ्च (Padipancha), (4) यांचष्टौ (Yadyashtow)

भानो वह्निशरैः स्ववासमनोसुरो रामो सुवारी शिखरिन्द्रियापयसा ।
भौमो गजेन्द्रो लघुभावतोसुरो गोकर्णरसा तु सुरागमथिर्डी ॥
ज्ञः परे गह्वरभेरवस्थलो रागी मलौ भास्करगर्भगाचलाः ।
सितो त्रिपस्थान्यसत्वद्रियक्षया शूली मम प्रीतिकररोस्तु तर्थिकृत् ॥

The figures in the 12 places from the Sun are respectively 3, 3, 3, 2, 3, 4, 5, 3, 5, 7, 2; from the Moon, 2, 3, 5, 2, 2, 5, 2, 2, 2, 3, 7, 1; from Mars,* 4, 5, 3, 5, 2, 3, 4, 4, 4, 6, 7, 2; from Mercury 3, 1, 5, 2, 6, 6, 1, 2, 5, 5, 7, 3; from Jupiter§ 2, 2, 1, 2, 3, 4, 2, 4, 2, 4, 7, 3; from Venus, 2, 3, 3, 3, 4, 4, 2, 3, 4, 3, 6, 3; from Saturn 3, 2, 4, 4, 4, 3, 3, 4, 4, 4, 6, 1; from Lagna, 5, 3, 5, 5, 2, 6, 1, 2, 2, 6, 7, 1.

The statement in the next page shows in a tabular form the figures of benefic dots for the सर्वाष्टकवर्ग (Sarvashtaka Narga) accord-

---

* The figures from Mars ought to be 4, 5, 3, 4, 3, 3, 4, 4, 4, 6, 7, 2. But see foot-note to शुक्राष्टकवर्ग (Sukrashtakavarga) p. 652.

§ The figures from Jupiter ought to be 2, 1, 1, 2, 3, 4, 2, 4, 2, 4, 7, 4. But see foot note to चन्द्राष्टकवर्ग (Chandrashtakavarga) p. 650.

ing to the above slokas for the sample horoscope referred to in page 657 It enables one to find out from a glance how many benefic dots have been contributed by the several planets in each of the 12 Rasis

| | Sun | Moon | Mars | Mercury | Jupiter | Venus | Saturn | Lagna | Total |
|---|---|---|---|---|---|---|---|---|---|
| Mesha | 5 | 3 | 3 | 7 | 2 | 6 | 4 | 7 | 37 |
| Vrishabha | 7 | 5 | 4 | 3 | 4 | 8 | 4 | 1 | 31 |
| Mithuna | 2 | 2 | 4 | 3 | 2 | 2 | 1 | 5 | 24 |
| Kataka | 3 | 2 | 4 | 1 | [illegible] | 3 | 3 | 3 | 23 |
| Simha | 3 | 5 | 6 | 5 | 7 | 8 | 8 | 5 | 37 |
| Kanya | 5 | 2 | 7 | 2 | 1 | 3 | 4 | 5 | 30 |
| Tula | 3 | 2 | 2 | 6 | 2 | 4 | 4 | [illegible] | 25 |
| Vrischika | 9 | 2 | 4 | 6 | | 4 | 4 | 6 | 29 |
| Dhanus | 3 | 3 | 5 | 1 | 1 | 2 | 6 | 1 | 22 |
| Makara | 4 | 7 | 3 | 2 | 2 | 3 | 1 | 2 | 24 |
| Kumbha | 5 | 1 | 4 | 5 | 3 | 1 | 3 | 2 | 27 |
| Meena | 3 | 2 | 3 | 5 | 4 | 3 | 2 | 6 | 28 |
| Total | 43 | 36 | 49 | 46 | 3 | 40 | 42 | 45 | 337 |

आपञ्चविंशतिफलान्यफलानि सत्य-
मात्रिंशदक्षसहितानि च मध्यमानि ।
त्रिंशत्पराणि सुखवित्तयशस्कराणि
तद्भावपुष्टिफलदानि च सामुदाये ॥ ५२ ॥

Sl ka 53 In the सर्वाष्टकवर्ग (Sarvashtakavarga), the

number of benefic dots up to 25 appearing in any bhava are void of effect. From 25 to 80 benefic dots in a bhava produce medium effect. More than 30 benefic dots in any bhava produce happiness, wealth and fame while serving to advance the bhava wherein they appear.

NOTES.

Statement showing the several भिन्नाष्टकवर्ग (Bhinnashtaka Varga) figures for the same horoscope.

| | Sun | Moon | Mars | Mercury | Jupiter | Venus | Saturn | Sarvashtaka Varga | Lagna |
|---|---|---|---|---|---|---|---|---|---|
| Mesha | 3 | 7 | 4 | 4 | 7 | 6 | 6 | 37 | 6 |
| Vrishabha | 7 | 3 | 5 | 5 | 3 | 4 | 4 | 31 | 3 |
| Mithuna | 2 | 2 | 2 | 6 | 4 | 6 | 2 | 24 | 4 |
| Kataka | 2 | 3 | 1 | 3 | 7 | 5 | 2 | 23 | 4 |
| Simha | 7 | 6 | 6 | 6 | 3 | 4 | 5 | 37 | 5 |
| Kanya | 3 | 6 | 4 | 5 | 5 | 4 | 3 | 30 | 4 |
| Tulá | 3 | 3 | 2 | 4 | 5 | 6 | 2 | 25 | 3 |
| Vrischika | 5 | 1 | 6 | 5 | 6 | 3 | 3 | 29 | 5 |
| Dhanus | 4 | 6 | 3 | 4 | 3 | 1 | 1 | 22 | 3 |
| Makara | 2 | 5 | 2 | 3 | 4 | 4 | 4 | 24 | 5 |
| Kumbha | 5 | 2 | 2 | 4 | 5 | 6 | 3 | 27 | 4 |
| Meena | 5 | 5 | 2 | 5 | 4 | 3 | 4 | 28 | 3 |
| Total | 48 | 49 | 39 | 54 | 56 | 52 | 39 | 337 | 49 |

*cf.* फलदीपिका

त्रिंशाधिकफला ये स्यू राशयस्ते शुभप्रदाः ।
पञ्चविंशात्परं मध्यं कष्टं तस्मादधः फलम् ॥

Also जातकादेश

त्रिंशद्धचो येऽधिकाक्षा अपि शरकृतितो राशयो ये तदूनाः
श्रेष्ठा मध्याश्च कष्टाः क्रमश इति मता गृह्णतां श्रेष्ठराशिः ।
सर्वास्विष्टक्रियासु त्यजतु न गमनाद्येषु कार्येषु कष्टान्
संबन्धे संपदापत्सतति युवतिनॄणां श्रेष्ठकष्टर्क्षकाणां ॥

ये तुङ्गराशिस्वसुहृद्गृहस्था ये कोणकेन्द्रोपचयस्थिताश्च ।
ये सौम्यवर्गादिबलोपयातास्ते नाशदा लाघवबिन्दुकाश्चेत् ॥५४॥

*Sloka* 54. Planets occupying, it may be, their exaltation, their own, a friend's house, a Trikona, a Kendra, or an उपचय (Upachaya) place or possessed of such strength as is derived from being in benefic vargas, may do evil if associated with insufficient benefic dots (in the सर्वाष्टकवर्ग-Sarvashtakavarga).

ये चावसानरिपुरन्ध्रतुरङ्गभागाः
ये नीचपापरिपुखेचरवर्गयुक्ताः ।
ये मान्दिराशिपतिना सह बाधकाश्च
ते सर्वमुख्यफलदास्त्वधिबिन्दुकाश्चेत् ॥ ५५ ॥

*Sloka* 55. Planets which as occupying portions of the 12th, the 6th, the 8th or the 7th bhavas are considered malefic; secondly, those that are in the vargas of their depression signs or of malefic or inimical planets; 3rdly and *lastly, those that conspire in conjunction with* the lord of the sign occupied by मान्दि (Mandhi) to work evil—these three classes of planets, if only associated with a higher number of benefic dots, produce all important beneficial results to the person concerned.

मानस्थिताल्लाभगृहे बहुत्वे लाभाद्व्ययस्थे यदि रिःफराशौ ।
रिःफोपयातादधिके विलग्ने जातः सुखी वित्तयशोबलाढ्यः ॥५६ ॥

*Sloka* 60. If a person have his birth under a yoga betokening great prosperity, he will, upon the expiry of a number of years indicated by the सर्वाष्टकवर्ग (Sarvashtaka Varga) figures in the Lagna, be in a fair way to get a royal vehicle (such as a palanquin), riches, sons and knowledge surpassingly great.

रिःफाधीशे मन्दगेहोदयस्थे होरारन्ध्रस्वामिनौ दुर्बलौ च ।
लग्ने यावद्बिन्दुसंख्यास्तदीया जातस्यायुर्वत्सराः सम्भवन्ति ॥ ६१ ॥

*Sloka* 61. When the lord of the 12th bhava occupies the 1st represented by a Rasi belonging to Saturn, and when the lords of the Lagna and the 8th bhava are weak, the person born will live as many years as there are benefic dots in the Lagna in the सर्वाष्टकवर्ग (Sarvashtaka Varga).

पातालाधीशे लग्नगे वाहनस्थे लग्नाधीशे तद्ग्रहोपेतराश्योः ।
त्रिंशत्संख्याबिन्दवः सन्ति चेत् जाता राजश्रीनिदाना नरेशाः ६२

*Sloka* 62. When the lord of the 4th bhava is in the Lagna and the lord thereof is in the 4th, and when the number of benefic dots in each of the Rasis occupied by these planets is 23, the persons born will become lords of men and centres of kingly glory.

होराबन्धुप्राप्तिभावत्रयेषु त्रिंशन्मानाधिक्यबिंदूपगेषु ।
जातस्तेजःश्रीबहुत्वं च राज्यं चत्वारिंशद्वत्सरादूर्ध्वमेति ॥ ६३ ॥

*Sloka* 63. When the 1st, 4th and the 11th bhavas are each associated with benefic dots exceeding 30, the person born will, after his 10th year, attain to power and prosperity in abundance culminating in kingship.

यत्पञ्चविंशतिमुखास्त्रिदशान्तसंख्या
बन्धुस्थिता नवमराशिकबिन्दवश्च ।

यद्यष्टकेन सह विंशतिवत्सराणा-
मन्ते परे शरदि वा नरवाहनाढ्यः ॥ ६४ ॥

*Sloka* 64. If the number of benefic dots in the 4th and in the 9th Rasi from the Lagna lie between 25 and 30, the person born will be rich as Kubera at the end of 28 years or in some year subsequent thereto.

देवाचार्ये वाहनस्थे स्वतुङ्गे चत्वारिंशद्बिन्दुसंख्यासमेते ।
मेषागारे लग्नगे वासरेशे जातो राजा लक्षसंख्याश्वनाथः ॥६५॥

*Sloka* 65. When Jupiter occupying the 4th bhava in exaltation is associated with 40 benefic dots and the Sun is in Mesha identical with the Lagna, the person born will become a king and be in command of a 100,000 horse.

चत्वारिंशद्बिन्दुयुक्ते विलग्ने चापे जीवे भार्गवे मीनराशौ ।
स्वोच्चे भौमे कुंभगे भानुपुत्रे जातः सर्वश्रीधरः सार्वभौमः ॥ ६६ ॥

*Sloka* 66. With 40 benefic dots in the Lagna, with Jupiter in Dhanus, with Venus in Meena, with Mars in exaltation and with Saturn in Kumbha, the person born should become an emperor blessed with every kind of good fortune.

क्रियादिराशित्रितयोपयाता भवन्ति पूर्वादिचतुर्दिशश्च ।
फलाधिकं यद्दिशि तत्प्रदेशे धनादिवृद्धिं समुपैति जातः ॥६७॥

*Sloka* 67. The four quarters beginning with the East have been assigned to the four triads of Rasis whereof the first are Mesha, Vrishabha, Mithuna and Kataka (*Vide* Adhyaya I *sl.* 13). With reference to a horoscope that may be under examination, ascertain the quarter in which there is an abundance of benefic dots ;

*Sloka* 56. If in the सर्वाष्टकवर्ग (Sarvashtaka Varga) the number of benefic dots in the 11th bhava be greater than that in the 10th, but the figure in the 12th lower than that in the 11th and if the figure in the Lagna exceed the figure in the 12th bhava, the person born will be happy with abundance of wealth, fame and strength.

*cf.* फलदीपिका

मध्यात्फलाधिकं लाभे लाभात्क्षीणतरे व्यये ।
यस्य व्ययाधिके लग्ने भोगवानर्थवान् भवेत् ॥

खण्डत्रयं झषकर्कटकीटकाद्यं
तच्चतुष्टयगृहोपगबिन्दुयुक्तम् ।
आद्यञ्च मध्यमवसानमिति प्रयुक्तं
केचिद्व्ययादिकमिह प्रवदन्ति लोके ॥ ५७ ॥

*Sloka* 57. Three divisions made of the 12 signs, the first commencing with Meena, the second with Karkataka and the third with Vrischika and exhibiting each its own benefic dots in its respective 4 houses are made to indicate the first, the middle and the concluding portion of the life under examination. Some opine that the three grand divisions are made from the व्ययभाव (Vyayabhava) to begin with.

*cf.* बालादेश

मीनेन्द्वालयवृश्चिकप्रभृतिकं खण्डत्रयं कल्पये-
दाद्येऽक्षाधिकताद्गिमे तु वयसस्त्र्यंशे विदद्ध्यात्सुखम् ।
मध्ये मध्यवयस्यथान्तिमवयस्त्र्यंशेऽन्त्यखण्डे हि सा
हीनाक्षस्तु वयस्त्रिभाग इह योत्र व्याधिदुःखोद्भवः ॥
बिन्दुं त्यक्त्वा रिःफरन्ध्रोपयातं शिष्टं खण्डं केचिदिच्छन्ति सन्तः ।
तुल्यस्वल्पाधिक्यबिन्दुक्रमेण मिश्रं दुःखं सम्पदः स्युर्नराणाम् ५८

*Sloka* 58. Some recommend the omission of the benefic dots in the 12th as well as in the 8th bhava from their several divisions; the aggregate benefic dots in any one division should be compared with the same in the other two. If the figures in the three divisions be equal, the life of the person concerned would be a mixed one with its joys and sorrows evenly distributed; if unequal, the lower figure implies diminution of comfort, *i.e.* misery; the higher one betokens increased comforts, *i.e.* prosperity.

सौम्याक्रान्तं यदि सुखकरं मिश्रदं मिश्रयोगे
खण्डं पापद्युचरसहितं क्लेशयोगाकरं स्यात् ।
बिन्दुस्वल्पो यदि गदमनस्तापवान् पापवादी
बिन्द्वाधिक्ये वयसि विपुलश्रीसमेतः प्रजातः ॥ ५९ ॥

*Sloka* 59. If benefic planets occupy the signs of any division, the portion of life corresponding to this खण्ड (khanda) will be happy. If the signs of a खण्ड (khanda) have both malefic and benefic planets in them, the effect on the portion of the life typified by the खण्ड (khanda) will be mixed; if any division contains malefic planets exclusively, the period of life represented will abound in accessions of affliction. If the number of benefic dots in any division be small, the person born will suffer from disease and mental pain and will be speaking evil things. If there be a preponderance of benefic dots in a खण्ड (Khanda), the person concerned will enjoy extensive prosperity in the period of life thus distinguished

यावद्बिन्दुर्लग्नगस्तावदीयसंख्यातीते वत्सरे राजयानम् ।
वित्तं पुत्रं चातिविद्यामुपैति जातः सम्पद्योगशाली नरश्चेत् ॥ ६० ॥

it is there that the owner of the horoscope will get an accession to his wealth, etc.

लग्नादिशन्यन्तगतं तुरङ्गैः संगुण्यताराहृतलब्धयाते ।
रव्यादि पापे यदि कोणगे वा रोगादिपीडा विपुला नराणाम् ॥

*Sloka* 68. Find the aggregate of benefic dots from the Lagna to Saturn (both inclusive) Multiply it by 7 and divide the product by 27. When, in the asterism indicated by the remainder (reckoned from Aswini) or its Trikona, the Sun and other malignant planets pass, the person concerned will suffer from diseases and other ills on a large scale.

मन्दादिलग्नान्तफलं च तद्वल्लग्नान्तमारादुदयात् कुजान्तम् ।
शुभैक्यसंख्यागततारकायां शुभग्रहे सौख्यफलं वदन्ति ॥ ६९ ॥

*Sloka* 69. Deal in the above way with the aggregate of benefic dots counted from Saturn to Lagna, and with those from Mars to Lagna, as well as from Lagna to Mars, severally. Find the aggregate of benefic dots in the Rasis occupied by benefic planets and the star indicated thereby. When a benefic planet passes through this asterism, good things, they say, may be expected.

NOTES.

*cf.* फलदीपिका

लग्नात्प्रभृति मन्दान्तमेकीकृत्य फलानि वै ।
सप्तभिर्गुणयेत्पश्चात्सप्तविंशाहृतात्फलम् ॥
तत्समानगते वर्षे दुःखं वा रोगमाप्नुयात् ।
एवं मन्दादिलग्नान्तं भौमराहोस्तथा फलम् ॥

Also जातकादेश

लग्नादारभ्य सूर्यात्मजगतभवनान्तमेकत्र युक्त्वा
सुघ्ने तस्मिन् सुताप्ते गतवति फलतुल्याब्दके रोगशोकाः ।

मन्दादालग्नमेवं क्षितिसुतगतभाच्चाखिलं विलग्ना-
दाभौमंत्वेतिकृत्वा विधिमशुभमतिर्वादिशेचोदितान्दे ॥

The following additional information based on the सर्वाष्टकवर्ग (Sarvashtakavarga) figures are extracted from जातकादेश.

लग्नाम्ब्वात्मजकामधर्मगगनस्थाक्षाणि संयोजये-
दन्तर्भाग इहायमत्र फलबाहुल्ये मनस्तुष्टता ।
विद्याज्ञानसुकर्मदाननिरतिश्चान्यस्थिताक्षान्वयो
भागोन्यत्र फलाधिके सति मनःपीडा च डंभादिकम् ॥
लग्नाद्यस्तचतुस्त्रिकोणभवनं बन्धत्वाह्वयं सेवके
तद्वत्पोपत घातकाह्वयमर्मीष्वक्षाणि संयोजयेत् ।
आधिक्यं खलु पोषकस्य यदि चेद्धन्तुर्धनी स्यादथः
दारिद्र्यं यदि पोपकादधिकता स्याद्घातकस्य ध्रुवम् ॥
केन्द्रस्थाक्षं पणपरगतमापोक्लिमगतं च युक्त्वापि ।
तेषामधिकाल्पत्वात्प्रथमादि वयःशुभाशुभं ज्ञेयम् ॥
यो राशिः फणिनाश्रितोऽष्टगफलैः संख्यासमे वत्सरे
नृणां पन्नगदंशनं गरलमुक्तिर्वाहिपेऽनिष्टगे ।
वर्गे भौमगतालयस्थितफलैस्तुल्ये तु शस्त्रक्षति-
र्मन्दार्कासिफलैः समानवयसि स्यू रोगशोकादयः ॥

**एकाधिपत्यं सहकोणभावैः संशोध्य सन्त्यज्य दिनेशमानैः ।**
**यद्यर्कसंख्या न हरेदशेषं मेषादि सर्वाष्टकशोधितं स्यात् ॥ ७० ॥**

*Sloka* 70. Make the Trikona and Ekadhipatya reductions in regard to the सर्वाष्टकवर्ग (Sarvashtakavarga) figures. Out of the figures left after the two reductions in the several Rasis, go on subtracting 12 as often as possible. If the reduced figure happens to be 12 itself, it is not to be taken away. The figures contained in Mesha and other Rasis are to be thus treated.

अष्टवर्गं समुद्धृत्य ग्रहाणां राशिमण्डले ।
मागत्रिकोणं संशोध्य पश्चादेकाधिपत्यताम् ॥
एकस्मिन् मण्डलाधिक्यं शोधयेच्चक्रमण्डलम् ।
द्वादशैव तु गृह्णीयादेवं सर्वेषु राशिषु ॥
पूर्वोक्तगुणकारैस्तु वर्धयेच्च पृथक् पृथक् ।
एकीकृत्य ततः सर्वं सप्तभिर्गुणयेत्पुनः ॥
सप्तविंशतिहृताल्लब्धं आयुःपिण्डः प्रदृश्यते ।
द्वादशादिगुणाल्लब्धं मासादिघटिकास्ततः ॥
शतादूर्ध्वं तु तत्पिण्डं मण्डलं शोधयेच्च तम् ।
शतमेव तु गृह्णीयाद्दीर्घायुर्योगसंभवी ॥
तद्विधं सकलं कृत्वा पराङ्केन विवर्धितम् ।
भातङ्गहृतलब्धायुर्मातङ्गाब्दं प्रदृश्यते ॥

शोध्यं राशिग्रहचरगुणकैः सङ्गुणय्यैतदैक्यं
हत्वा शैलैरुडुगणहृतं लब्धमब्दादिकं स्यात् ।
मानाधिक्ये विशतमशते तारकायुर्वराङ्गैः
हत्वा भक्तं दिवसनिचयैर्मातुलैः शुद्धमायुः ॥ ७१ ॥

*Sloka* 71. Multiply the net figures in the (सर्वाष्टकवर्ग) Sarvashtakavarga (after the reductions mentioned in the previous sloka have been made) by the zodiacal and planetary factors and make an aggregate of the products. Multiply this by 7 and divide the product by 27. The quotient consisting of years, months, days, etc., if in excess of the standard Ayus, *i.e.* 100 years, should be diminished by 100 years; if short of 100 is to be kept unaltered. This will represent the नक्षत्रायुस् (Nakshatra Ayus) which when multiplied by 324 and divided by 365 will give the period of life correctly in solar years.

स्वल्पमध्यबहुमानवत्सरा मण्डलोनयुतकर्मकल्पिताः ।
तुल्यकालमुपयान्ति सर्वतः सद्गुणोदयकटाक्षवीक्षणात् ॥ ७२ ॥

*Sloka* 72. The years making up the life whether short, middle or long of a person (obtained by the process above mentioned) will square with the period otherwise obtained, by the diminution or addition as the case may be of a multiple of 27 ascertained upon an examination of the aspect, if any, upon the Lagna, by benefic planets.

श्रीवैद्यनाथकृतजातकपारिजाते
पाराशरादिफलसाररसोपयाते ।
प्रस्तारभिन्नसमुदायकबिन्दुशीलः
संकीर्तितस्तु सकलद्युचरप्रसादात् ॥ ७३ ॥

॥ इति दशमोऽध्यायः ॥

*Sloka* 73. In the work of Jatakaparijata compiled by Vaidyanatha and containing the essence of treatises on planetary effects such as Parasara's, the chapter on benefic dots, appearing in the Ashtakavargas designated प्रस्तार (Prasthara), भिन्न (Bhinna) and समुदाय (Samudaya) has been treated by the grace of the entire body of planets.

NOTES.

The following from बलभद्र (Balabhadra) for ascertaining the month and the asterism of the death of a person will be found useful :—

## ॥ अथ मरणे मासज्ञानम् ॥

मन्दान्मन्दाष्टमाधीशपर्यन्तं यः फलोचयः ।
तेन संगुणयेद्वीगानष्टमस्थफलानि वै ॥

द्वादशांकहृताच्छेषं यत्तद्राशिगते रवौ ।
मृत्युं तत्र विजानीयात्तत्त्रिकोणमथापि वा ॥
एवमेव विजानीयात्पितृमातृगृहादिषु ।
लग्नादष्टमपाद्वापि सर्वमेतद्विचारयेत् ॥
अर्कस्फुटकलाः स्थाप्याः राहोः स्फुटकलाहताः ।
चक्रलिप्ताहृताल्लब्धं योजयेद्भास्करे स्फुटे ॥
तादृशे भास्करे यस्मिन् तस्मिन्मासे मृतिं वदेत् ।
तत्त्रिकोणगते वापि निधनं तत्र निर्दिशेत् ॥
अष्टमाधिपतिर्नीचे चन्द्रे षष्ठाष्टमेऽपि वा ।
लग्नाष्टमेऽरिसंस्थस्य तन्मासे मरणं वदेत् ॥

अथ निधनचन्द्रज्ञानम् ।

अष्टमेशे त्रिकोणस्थे चन्द्रे च निधनं वदेत् ।
जन्मलग्नांशकाच्चन्द्रनवांशाद्यवापि वा ॥
राहौ चतुःषष्ठिमिते निधनं च विनिर्दिशेत् ।
जन्मलग्नाष्टमे राशौ जन्मलग्नोदयेऽपि वा ॥
लग्ननीचोदये वापि तेषां शुद्धोदये मृतिः ॥

End of the 10th Adbyaya.

# जातकपारिजाते एकादशोऽध्यायः

## ॥ अथ भावफलानि ॥

### Adhyaya XI.

THE EFFECTS OF THE 1ST AND THE 2ND BHAVAS.

होरालंकारमुख्यप्रभवशुभफलादीनि सर्वाणि पुंसां
तच्चक्राद्योद्भवानि द्युचरबलवशाद्यानि तानि प्रवच्मि ।
ये ये भावाः सितज्ञामरगुरुपतिभिः संयुता वीक्षिता वा
नान्यैर्दृष्टा न युक्ता यदि शुभफलदा मूर्तिमात्रादिकेषु ॥१॥

*Sloka* 1. I am to treat of the good and other effects which are the chief source of adornment to the science of astrology just as they arise in the several bhavas appertaining to men owing to the prepondera-ting influence of planets. Among the Lagna and other bhavas, such as are occupied or aspected by Venus, Mercury, Jupiter or the भावपति (Bhavapathi–the lord of the bhava concerned), but unaspected by or unassociated with the rest, produce happy results.

*cf.* उत्तरकालामृत

यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्य तस्याभिवृद्धिः ।
पापैरेवं तस्य भावस्य हानिर्निर्देष्टव्या प्रश्नतो जन्मतो वा ॥

लग्नादिभावेषु शुभोदयेषु तद्भावनाथोपगतेक्षितेषु ।
तदुक्तभावस्य समृद्धिरुक्ता न पापखेटेक्षितसंयुतेषु ॥ २ ॥

*Sloka* 2. When the Lagna and some of the other bhavas have benefic planets appearing in them or are occupied or aspected by their lords, a wealth of the said bhavas may be declared to exist provided they are unaspected or unoccupied by malefic planets.

नीचस्थो रिपुराशिस्थः खेटो भावविनाशकः ।
मूलस्वतुङ्गमित्रस्थो भाववृद्धिकरो भवेत् ॥ ३ ॥

*Sloka* 3. A planet in its depression or inimical sign destroys the bhava that it owns. But in its मूलत्रिकोण (Moolatrikona), exaltation or friendly sign it advances the same.

*cf.* [illegible]

यद्भावेशोऽरिनीचस्थो मूढो वा तत्र पश्यति ।
तद्भावसत्त्वमाल्पत्वं वैरित्वं वा विनिर्दिशेत् ॥
भावेशः कारकोऽपि स्वगृहमुपगतौ तुङ्गभस्थौ यदा ता-
वन्योन्यस्थौ शुभाभ्यामभित इतियुतौ वीक्षितौ सौम्यदृष्टौ ।
भावेवं भावपुष्टिर्भवति यदि हितौ दुःस्थलस्थौ युतौ वा
दृष्टौ पापापचारैर्न भवति रिपुनीचास्तयुक्तौ च हानिः ॥
भावं पश्यति वा स्थितोऽथ यदि वा यः कोऽपि भावाधिपः
तुङ्गान्योन्यसुहृत्त्रिकोणगतो दृष्टः शुभैर्भस्पगः ।
भावस्यास्ति बले न चास्ति यदि चेद्भावाधिपो दुःस्थितो
नीचास्तारिगृहे गतो यदि भवेत्पापैर्युतो वीक्षितः ॥

यद्भावनाथो रिपुरिःफरन्ध्रे दुःस्थानपो यद्भवनस्थितो वा ।
तद्भावनाशं कथयन्ति तज्ज्ञाः शुभेक्षितश्चेत्फलमन्यथा स्यात् ॥ ४ ॥

*Sloka* 4. When a bhava has its lord in the 6th, the 8th or the 12th, or is occupied by the lord of one of these three, it suffers annihilation, say those that know

the properties of a bhava If such a bhava be aspected by a benefic planet, the effect will be different.

यद्भावपः केन्द्रगतो विलग्नात् त्रिकोणगो वा यदि सौम्यदृष्टः ।
तुङ्गादिवर्गोपगतो बलाढ्यस्तद्भावपुष्टिं फलमाहुरार्याः ॥ ५ ॥

*Sloka* 5. If the lord of a bhava occupying a Kendra or Trikona position from the Lagna possess abundant strength being either aspected by benefic planets or in its exaltation and other Vargas, that bhava, say the wise astrologers, is in a flourishing condition.

उत्तरपाराशरे

भावेशः कारकोऽपि स्वगृहमुपगतौ तुङ्गगौ वा मिथस्थौ
मित्रे मध्ये शुभानां यदि भवति मित्रस्थानगौ भावपुष्टिः ।
अन्योन्यं शत्रुभूतौ यदपि च भवतो नीचभावं गतौ वा
मूढौ वा पापयुक्तौ तु शुभनिधनगौ भावनाशं गणन्ति ॥

तत्तद्भावत्रिकोणे सुखमदनगृहे चाऽऽस्पदे सौम्ययुक्ते
पापानां दृष्टिहीने भवनपसहिते पापखेटैरयुक्ते ।
भावानां पुष्टिमाहुः सकलशुभकरीमन्यथा चेत्प्रणाशं
मिश्रं मिश्रग्रहेन्द्रैरखिलमपि तथा मूर्तिभावादिकानाम् ॥ ६ ॥

*Sloka* 6. Astrologers pronounce the strength of a bhava such as the Lagna to be ample and thoroughly beneficent when a Trikona, the 4th, the 7th or the 10th place therefrom is occupied by an auspicious planet or भावप (bhavapa–the lord of the bhava) and is unoccupied or unaspected by malefic planets. A bhava suffers decay when the positions referred to above are differently occupied and aspected The effect of a bhava will be mixed when the positions noted above are occupied or aspected by benefic and malefic planets promiscuously.

wealth are what a person has to put up with in the bhukti of Saturn in Mars' mahadasa.

*cf.* फलदीपिका

उपर्युपरि निनाशः स्वात्मजस्त्रीगुरूणां
अगणितविपदन्तं दुःखमर्थोपहानिः ।
वसुहरणमरिभ्यो भीतिरुग्णानिलाग्नि-
र्भवति कुजदशायामर्कजे सम्प्रयाते ॥

Also जातकाभरण

कलत्रपुत्रात्मजनेषु बाधा प्रागप्रयाणान्तशरीरपीडा ।
स्वस्थानयानं यदि भानुसूनोरन्तर्दशा भौमदशान्तराले ॥

वैश्यवर्गाद्धनप्राप्तिं गृहगोधान्यसम्पदः ।
शत्रुबाधा मनःक्लेशं बुधे कुजदशान्तरे ॥ ८९ ॥

*Sloka* 89. Accession of wealth from the trading community, abundance of houses, cows and grain, trouble from enemies and mental worry—these, a person may have in the interval of Mercury in Mars' mahadasa.

*cf.* फलदीपिका

अरिभयमुरुरोगोपद्रवोऽर्थहानिः
पशुगजतुरगाणां विद्रवोऽमित्रयोगः ।
नृपकृतपरिपीडा शुद्रवैरोद्भवो वा
विशति शशितनूजे विश्वधात्रीसुतायुः ॥

Also जातकाभरण

अरातिभूपामयतस्करेभ्यः पीडां वियोगं सुतदारमित्रैः ।
स्वल्पोत्सवं यच्छति चन्द्रसूनुर्भौमस्य पाके यदि संप्रविष्टः ॥

कुक्षिरोगेण सन्तापं बन्धुसोदरपीडनम् ।
दुष्टमानवबन्धुत्वं केतौ कुजदशान्तरे ॥ ९० ॥

*Sloka* 90. Great suffering brought on by a disease of the stomach, trouble from relat ons and brothers,

and opposition of bad people have to be apprehended when Ketu has its interval in Mars' dasa.

*cf.* फलदीपिका

> अशनिभयमकस्मादग्निशस्त्रप्रपीडा
> विगमनमथ देशाद्वित्तनाशोऽथवा स्यात् ।
> अपगमनमसुभ्यो योषितो वा विनाशः
> प्रविशति यदि केतुः क्रूरनेत्रान्तरन्तम् ॥

फलत्रभूषणं वस्त्रं बन्धुवर्गाद्धनागमम् ।
स्त्रीजनद्वेष्यतद्गोष्ठीं शुक्रे भौमदशान्तरे ॥ ९१ ॥

*Sloka* 91. Jewel for the wife, clothing, incoming of money from relatives, odium of females and their society (nevertheless) will be what a person may expect in the bhukti of Venus in Mars' dasa.

*cf.* फलदीपिका

> क्षुधि जनितविमानं विप्रवासस्वदेशात्
> वसुहृतिरपि चोरैर्वामनेत्रोपरोधः ।
> परिजनपरिहानिर्जायते मानवाना-
> मपहरति यदायुर्भौमिजं भार्गवेन्द्रः ॥

Also जातकाभरण

> विदेशयानव्यसनामयाद्यैः कुटुम्बवादद्रविणव्ययैश्च ।
> नानाप्रवासैश्चलचित्तवृत्तिर्भौमान्तरे दानवराजपूज्ये ॥

अपवादं गुरुद्वेषं कलहं व्याधिपीडनम् ।
आत्मवर्गान्मनोदुःखं रवौ भौमदशान्तरे ॥ ९२ ॥

*Sloka* 92. Blame, odium of the elders, quarrel with them, suffering caused by disease, heart-ache occasioned by one's own party are what may crop up in the Sun's apahara in Mars' dasa.

*cf.* फलदीपिका

नृपकुलपरिपूजा युद्धलब्धप्रभावः परिजनधनधान्यश्रीमदन्तःपुरश्च ।
अतिविलसितवृत्तिः साहसाद्वाप्तलक्ष्मीस्तिमिरभिदि कुजायुर्दायसंहारिणीति ॥

Also जातकाभरण

नानाधनाभ्यागमनानि नूनं सन्मानवृद्धिं मनुजादिराजात् ।
चण्डत्वमार्गौ विनयं विदध्यात् भानुर्धरासूनुदशान्तरस्थः ॥
दुर्गशैलवनसंचलनेच्छा बन्धुतातजनिताविनिरोधः ।
मानवो भवति भूतनयान्तर्भास्करे चरति केऽपि वदन्ति ॥

**नानावित्तसुखं वस्त्रमुक्तामणिविभूषणम् ।**
**निद्रालस्यं मदोद्रेकं चन्द्रे भौमदशान्तरे ॥ ९३ ॥**

*Sloka* 93. Various comforts that wealth affords, cloths, pearls, precious stones, ornaments, heavy sleep and ardent passion may mark the Moon's bhukti in Mars' mahadasa.

*cf.* फलदीपिका

विविधधनसुताप्तिर्विप्रयोगोऽरिवर्गैर्वसनशयनभूपारत्नसम्पत्प्रसूतिः ।
भवति गुरुजनार्तिर्गुल्मपित्तप्रपीडा धरणितनयवर्षे शीतगौ संप्रयाते ॥

Also जातकाभरण

नित्योत्सवानन्दमहापदानि मुक्ताफलद्रव्यविभूषणानि ।
मित्रोद्गमं श्लेष्मविकारमिन्दुर्भौमस्य पाके वितरन् करोति ॥

**भूनन्दनस्य पाकादौ मानहानिर्धनक्षयः ।**
**मध्ये नृपाग्निचोराद्यैर्भीतिरन्ते तथा भवेत् ॥ ९४ ॥**

*Sloka* 94. At the outset of Mars' dasa, there will be humiliation and waste of wealth In the middle of the dasa, there may be danger to be apprehended from rulers, fire, brigands, and the like; the same will happen also in the concluding portion of the dasa.

उच्चस्थितस्य धरणीतनयस्य पाके
नीचांशगस्य मरणं सुतसोदराणाम् ।
नीचे तु तुङ्गभवनांशगतस्य दाये
कृष्यादिभूमिधनधान्यसुखं वदन्ति ॥ ९५ ॥

*Sloka* 95. If Mars occupy the depression Navamsa in its exaltation house, there will be according to the astrologers, death among the children and brothers of *the person concerned, during the dasa of the planet.* If it be in the house of depression and occupy the exaltation Navamsa, the effect will appear in the success of agriculture and other operations and in the accession to lands, wealth, grain and material comforts.

सौख्यादिवित्तस्थितिनाशनं च कलत्रपुत्रादिवियोगदुःखम् ।
अतीव रोगं परदेशवासं विवादबुद्धिं कुरुते फणीशः ॥ ९६ ॥

*Sloka* 96. Loss of such things as comfort, happiness, wealth and worldly status, the pang of parting with a wife, children and relatives, illness in the extreme, residence in a strange land, and a disposition to wrangle are what Rahu brings about.

फलदीपिकायाम्

कुर्यादहिः क्षितिपचोरविषाग्निशस्त्रभीतिं सुतार्तिमतिविभ्रमबन्धुनाशम् ।
नीचापमानमतिकष्टतोऽपवादं स्थानच्युतिं पदहतिं कृतकार्यहानिम् ॥

विधुन्तुदे शुभान्विते प्रशस्तभावसंयुते
दशा शुभप्रदा तदा महीपतुल्यभूतिदा ।
अभीष्टकार्यसिद्धयो गृहे सुखस्थितिर्भवेत्
अचञ्चलार्थसञ्चयाः क्षितौ प्रसिद्धकीर्तयः ॥
असुरवरदशायामस्वभावोऽव्यथा स्यात्
अतिगहनगतार्तिः सूनुनार्योर्विनाशः ।

विषमयमरिपीडा वीक्षणोर्ध्वाङ्गरोगः
सुहृदि कृषिविरोधो भूपतेर्द्वेषलाभः ॥

## ॥ राहुदशायामन्तर्दशाफलानि ॥

जायारोगं विवादं च बुद्धिनाशं धनक्षयम् ।
दूरदेशाटनं दुःखं राहौ राहुदशान्तरे ॥ ९७ ॥

*Sloka* 97. Illness of a wife, a controversy, failure of the intellect, waste of wealth, roaming in a far-off land and distress will be the characteristic features of Rahu's bhukti in Rahu's dasa.

*cf.* फलदीपिका

विषाम्बुल्दुष्टभुजङ्गदर्शनं परावलासंयुतिरिष्टविच्युतिः ।
अरिष्टवाग्दुष्टजनन्यथा भवेत् विधुन्तुदेनापहृते स्ववत्सरे ॥

व्याधिशत्रुविनाशं च राजप्रीतिं धनागमम् ।
पुत्रलाभं महोत्साहं गुरौ राहुदशान्तरे ॥ ९८ ॥

*Sloka* 98. Total disappearance of ailments and enemies, royal favor, accession of wealth, acquisition of children and great perseverence will mark Jupiter's bhukti in Rahu's dasa.

*Cf.* फलदीपिका

सुखोपनीतिः सुरविप्रपूजनं विरोगता वामदृशां समागमः ।
सुपुण्यशास्त्रार्थविचारसंभवः सुरारिदायान्तरगे बृहस्पतौ ॥

वातपित्तकृतं रोगं बन्धुमित्रादिपीडनम् ।
दूरदेशनिवासं च शनौ राहुदशान्तरे ॥ ९९ ॥

*Sloka* 99. A disease due to wind and bile, the distress of relatives, friends and well wishers, and residence in a remote foreign land are what may crop up during Saturn's interval in Rahu's dasa.

*cf.* फलदीपिका

समीरपित्तप्रगदक्षतिस्तनौ तनूजयोषित्सहजैश्च विग्रहः ।
स्वभृत्यनाशश्च पदच्युतिर्भवेत् दिति प्रजायुः प्रविशत्यथार्कजे ॥

मित्रबन्धुकलत्रादिसंयोगं च धनागमम् ।
राजप्रीतिमवाप्नोति बुधे राहुदशान्तरे ॥ १०० ॥

*Sloka* 100. The society of friends, relatives, wife and children, accession of wealth and royal favor can be enjoyed during Mercury's bhukti in Rahu's dasa.

*cf.* फलदीपिका

सुखसिद्धिः सुहृदां समागमो मनोविनिन्दत्वमतीव जायते ।
बहुक्रियाभूषणकौशलादयो भुजङ्गसंवत्सरहारिणीन्दुजे ॥

चौर्यं स्वमानहानिं च पुत्रनाशं पशुक्षयम् ।
सर्वोपद्रवमाप्नोति केतौ राहुदशान्तरे ॥ १०१ ॥

*Sloka* 101. Brigandage, loss of wealth and honor, loss of children, death among cattle, misfortunes of all kinds await a person in Ketu's bhukti in Rahu dasa.

*cf.* फलदीपिका

ज्वराग्निशस्त्रारिभयं शिरोरुजा शरीरकम्पस्सुहृदुरुव्यथा ।
विपन्नणार्तिः कलहः सुहृज्जनैरहीन्द्रदायान्तरगे शिखाधरे ॥

विदेशाद्वाहनप्राप्तिः छत्रचामरसम्पदः ।
रोगारिबन्धुभीतिः स्यात् शुक्रे राहुदशान्तरे ॥ १०२ ॥

*Sloka* 102. When Venus has its bhukti in Rahu dasa, there will be accession of vehicles, umbrellas, chowries and wealth of various sorts from foreign lands; but there may be trouble from diseases, foes and relatives.

*cf.* फलदीपिका

कलत्रलब्धिः शयनोपचारता तुरङ्गमातङ्गमहीसमागमः ।
कफानिलार्तिस्वजनैर्विरोधिता भवेद्भुजङ्गापुरपाहृतो भृगोः ।

दानधर्मरतिः प्रीतिः सर्वोपद्रवनाशनम् ।
संसाररोगसंचारो रवौ राहुदशान्तरे ॥ १०३ ॥

*Sloka* 103. Love of charitable acts, contentment, cessation of all violence and outrage and the spread of a contagious disease will mark the Sun's bhukti in Rahu dasa.

*cf.* फलदीपिका

अरिव्यथास्यादतिपीडनं दृशोः विपाग्निराज्ञाहतिरापदुद्गमः ।
वधूसुतार्तिर्नृपतेर्महद्भयं भुजङ्गवर्गे तिमिरारिणा हृते ॥

भोगसम्पद्भवेच्चित्यं सस्यवृद्धिर्धनागमः ।
स्वबन्धुजनसंवादो राहौ चन्द्रदशान्तरे ॥ १०४ ॥

*Sloka* 104. When the Moon has its bhukti in Rahu dasa, there will be an abundance of enjoyments, good crops, coming in of money and communion with kith and kin.

*Cf.* फलदीपिका

वधूविनाशः कलहो मनोरुजा कृषिक्रियावित्तपशुप्रनाशयः ।
सुहृद्विपत्तिः सलिलाद्भयं भवेत्विधौ दशामक्करि देवविद्विषः ॥

सर्वोपद्रवसंयोगः सर्वकार्येषु मूढता ।
चित्तविस्मृतिदोषः स्यात् कुजे राहुदशान्तरे ॥ १०५ ॥

*Sloka* 105. A combination of all possible calamities, bewilderment in every work and a culpable failure of memory will be the characteristic features of Mars' interval in Rahu dasa.

*Cf.* फलदीपिका

नृपाग्निचोरास्त्रभयं शरीरिणां शरीरनाशो यदि वा महारुजः ।
पदभ्रमं हृत्प्रहनप्रपीडनं यदात्र सर्पाद्युपि संचरेत्कुजः ॥

कुलीरगोमेषयुतस्य राहोर्दशाविपाके धनधान्यलाभम् ।
विद्याविनोदं नृपमाननं च कलत्रभृत्यादिसुखं वदन्ति ॥

*Sloka* 106. Rahu occupying Cancer, Taurus or Aries, say the astrologers, will secure to the person concerned during the ripening of its dasa wealth and corn, edification and amusement, honor from the sovereign, wives, servants and dependants happy and well-off.

पाथोनमीनाश्वयुतस्य राहोर्दशाविपाके सुतदारलाभम् ।
देशाधिपत्यं नरवाहनं च दशावसाने सकलस्य नाशम् ॥१०७॥

*Sloka* 107. Astrologers say that Rahu in Kanya, Meena, or Dhanus gives to the person concerned during its dasa wife and children, lordship of lands and a carriage drawn by men.

*All these are liable to be lost at the conclusion of* the dasa.

मृगपतिवृषकन्याकर्कटस्थस्य राहो-
र्भवति च परिपाके राजतुल्यो नृपो वा ।
गजतुरगचमूपः सर्वजीवोपकारी
बहुधनसुखशीलः पुत्रदारानुरक्तः ॥ १०८ ॥

*Sloka* 108. When Rahu is in Leo, Virgo or Cancer, a person becomes a king or a king's peer during the ripening of its dasa; he will command an army composed of elephants and horses, will be highly beneficent, exceedingly wealthy, devoted to pleasure and dearly attached to his wife and children.

दशादौ दुःखमाप्नोति दशामध्ये महत्सुखम् ।
दशान्ते फणिनाथस्य पितृनाशं पदच्युतिम् ॥ १०९ ॥

*Sloka* 109. At the outset of Rahu dasa, a person suffers distress; in the middle of it, he may have much enjoyment; but in the end, he may become bereaved of his parents and even lose his status.

स्थानप्राप्तिं वित्तयानाम्बराप्तिं राजस्नेहं चित्तशुद्धिं विभूतिम् ।
ज्ञानाचारं पुत्रदारादिलाभं देवाचार्यः स्वे विपाके करोति ॥

*Sloka* 110. Jupiter secures to the person concerned, during its dasa, rank, wealth, vehicle, apparel, royal good will, purity of heart, power, knowledge, practice corresponding thereto, wife, children and all else connected therewith.

*cf.* फलदीपिका

धर्मक्रियाप्तिममरेन्द्रगुरुर्विधत्ते सन्तानसिद्धिमवनीपतिपूजनं च ।
श्लाघ्यत्वमुन्नतजनेषु गजाश्वयानप्राप्तिं वधूसुतसुहृद्द्युतिमिष्टसिद्धिम् ॥
अमरगुरुदशायामन्तरार्थप्रसिद्धिः परिजनपरिवारप्रौढिरत्यर्थमानम् ।
सुतधनसुहृदाप्तिः साधुवादाप्तपूजा भवति गुरुवियोगः कर्मरोगः कफार्तिः ॥

## ॥ गुरुदशायामन्तर्दशाफलानि ॥

नृपप्रीतिं महोत्साहं सर्वकार्यार्थसाधनम् ।
विद्याविज्ञानमाप्नोति गुरौ गुरुदशान्तरे ॥ १११ ॥

*Sloka* 111. Royal favor, great diligence, achievement of everything attempted, learning and science are what a person may expect in Jupiter's dasa and bhukti.

*cf.* फलदीपिका

सौभाग्यकान्तिमहदुन्नतगुणोदयः स्यात् सत्पुत्रसिद्धिरवनीपतिपूजनं च ।
आचार्यसाधुजनसंस्तुतिरिष्टसिद्धिः संवत्सरं हरति देवगुरौ स्वपाके ॥

द्वेषबुद्धिं मनस्तापं पुत्रमूलाद्धनव्ययम् ।
कर्मनाशमवाप्नोति शनौ जीवदशान्तरे ॥ ११२ ॥

*Sloka* 112. A feeling of aversion, mental anguish, waste of wealth through the sons, failure of business are what a person may have to be prepared for during Saturn's interval in Jupiter's mahadasa.

*cf.* फलदीपिका

वेश्याङ्गनामदकृतासवदोषसङ्ग उत्कर्षसौख्यसकुटुम्बपशुप्रपीडा ।
धर्मव्ययोरुभयमक्षिजरुत्सुतार्तिः जैवीं दशां विशति दैनकरे नराणाम् ॥

Also जातकाभरण

वेश्यासवद्यूतकृषिक्रियार्थैर्विलुप्तधर्मार्गिणशाः कृशाङ्गः ।
खरक्रमेलादियुतो नरः स्याद् गुरोर्दशायां चलितेऽर्कसूनौ ॥

वैश्यवर्गेण वित्ताप्तिं राजस्नेहं सुखावहम् ।
सत्कर्माचारसिद्धिं च बुधे जीवदशान्तरे ॥ ११३ ॥

*Sloka* 113. Acquisition of wealth by means of the trading community, royal favor leading to material comforts and perfect practice of hospitality will mark Mercury's bhukti in Jupiter's mahadasa.

*cf.* फलदीपिका

स्त्रीद्यूतमद्यमहाव्यसनं त्रिदोषैः केचिद्वदन्त्यपि च केवलमङ्गलाप्तिः ।
देवद्विजार्चनसुतार्थसुखप्रयोगैर्गौरवप्रमितद्दशां हरतीन्दुसूनौ ॥

Also जातकाभरण

सद्बुद्धिकौशल्यसुरार्चनानि सदिन्दिरामन्दिरवाहनानि ।
कलत्रपुत्रादिसुखानि नूनं कुर्याद्बुधे जीवदशां प्रपन्नः ॥
विदेशयाने चलचित्तवृत्तिर्मनःप्रमादः शिरसि प्रपीडा ।
गुरोर्दशायां शशीन्दुपुत्रे केषांचिदेवात्र मतं निरुक्तम् ॥

मुक्ताप्रवालभूपाप्तिस्तीर्थयात्रा धनाप्तिः ।
गुरुभूपवशादाप्तिः केतौ जीवदशान्तरे ॥ ११४ ॥

*Sloka* 114. Acquisition of pearl and coral ornaments, pilgrimages to holy shrines, increase of wealth and suffering for the sake of reverend seniors and the king will mark Ketu's interval in Jupiter's mahadasa.

*cf.* फलदीपिका

शस्त्रव्रणो भवति भृत्यजनैर्विरोधः चित्तव्यथा तनययोपिद्रुपद्रवश्च ।
प्राणच्युतिर्गुरुसुहृज्जनविप्रयोगः सौरेड्यमाप्रुरपहृत्य ददाति केतुः ॥

वाहनादि धनप्राप्तिः छत्रचामरवैभवम् ।
स्त्रीपीडा जनविद्वेषो भृगौ जीवदशान्तरे ॥ ११५ ॥

*Sloka* 115. Acquisition of vehicles and other valuable property, the glory of umbrellas and chowries, trouble from females and public odium are to be looked for in Sukra's interval in Jupiter's mahadasa.

*cf.* फलदीपिका

नानाविधार्थपशुभान्यपरिच्छदस्त्रीपुत्रान्नपानशयनाम्बुविभूषणाप्तिः ।
देवद्विजार्चनमुपासनतत्परत्वमायुर्यदा हरति जैवमथासुरेड्यः ॥

Also जातकाभरण

निजैर्वियोगोऽर्थविनाशनं च श्लेष्मानिलश्चापि कलिप्रसङ्गः ।
स्यान्मानवानां व्यसनोपलब्धिर्भृगोः सुते जीवदशां प्रयाते ॥
धर्मक्रियायां निरतत्वमुच्चैर्विद्याम्बरान्नादिकसङ्ग्रहश्च ।
द्विजाश्रयः स्याद्गुरुपाकयाते सिते वदन्तीति फलं तु केचित् ॥

शत्रुनाशं जयं सौख्यं महोत्साहं धनागमम् ।
राजप्रसादमारोग्यं रवौ जीवदशान्तरे ॥ ११६ ॥

*Sloka* 116. Flight of enemies, victory, ease, great diligence, coming in of wealth, royal favor and sound health are what a person may expect in the Sun's interval in Jupiter's mahadasa.

*cf.* फलदीपिका

शत्रोर्जयः क्षितिपमाननकीर्तिलाभः स्याच्चण्डता नरतुरङ्गमवाहनाप्तिः ।
श्रेण्यमहारपुररत्नसमस्तसम्पद्भूमिरुतथ्यसहजाद्गुरपाहतेऽर्के ॥

Also जातकाभरण.

सुतार्थनानाविधवस्तुलाभं विशिष्टनामान्तरमाधिपत्यम् ।
मानं नरेशात्कुरुते दिनेशो वाचामधीशस्य दशां प्रपन्नः ॥

**स्त्रीकृतोत्साहमैश्वर्यं राजप्रीतिं सुखावहाम् ।**
**दिव्यवस्त्रविभूषाप्तिं चन्द्रे जीवदशान्तरे ॥ ११७ ॥**

*Sloka* 117. Power acquired under female impulse, royal favor leading to material comforts, acquisition of fine apparel and ornaments, are what a person may look for in the Moon's interval in Jupiter's mahadasa.

*cf.* फलदीपिका

योषिद्द्वृत्वमरिनाशमनर्घलाभं कृष्यर्थवस्तुपरमोन्नतकीर्तिलाभम् ।
देवद्विजार्चनपरत्वमतीव पुंसां संजायते गुरुदशाहृति शर्वरीशे ॥

Also जातकाभरण

नानाङ्गनाक्रीडनजातचित्तः श्रीराजचिन्हैश्च विराजमानः ।
विद्यानवद्यार्थयुतो नरः स्यात् जीवान्तरे शीतकरप्रचारे ॥

**कर्मनाशं च संचारं ज्वरतापं महद्भयम् ।**
**धननाशं निरुत्साहं कुजे जीवदशान्तरे ॥ ११८ ॥**

*Sloka* 118. Failure in business, wandering, high fever, great risk, loss of wealth and depression of spirits, a person must be prepared for in Kuja's interval in Jupiter's mahadasa.

*cf.* फलदीपिका

बन्धूपतोषणमरिप्रनतोऽर्थलाभं सुक्षेत्रसत्कृतिरिह प्रथितप्रभावम् ।
ईषद्गुरूपहतिरीक्षणसुक्षितिर्वा क्षित्यात्मजे हरति वत्सरमार्थजातम् ॥

Also जातकाभरण

रणाङ्गणप्राप्तयशोविशेषः सद्भोगसौख्यार्थसमन्वितश्च ।
प्रौढप्रतापोऽतितरां नरः स्याद्राहुते जीवदशां प्रयाते ॥
शीर्षे गुदे वापि भवेत्कदाचित् पीडा नराणामरिभीतिरुक्ता ।
बलक्षयः संचलनं कुलस्य जीवान्तराले प्रवदन्ति केचित् ॥

सर्वक्लेशभयं रोगं सर्वोपद्रवकारणम् ।
धनच्छेदमाप्नोति राहौ जीवदशान्तरे ॥ ११९ ॥

*Sloka.* 119. Apprehension of every trouble, disease, occasion for every possible calamity, and deprivation of income—this falls to the lot of a person in Rahu's bhukti in Jupiter's mahadasa.

*Cf.* फलदीपिका

बन्धूपतप्तिरुरुमानसरुग्मदार्तिश्चोराद्भयं गुरुगदो जठरोद्भवो वा ।
राजेन्द्रपीडनमरिव्यसनं स्वनाशः सम्पद्यते हरति सुरिदशा सुरारौ ॥

नीचांशोपगतः स्वतुङ्गभवने जीवः स्वपाके भयं
चोरारातिनृपैः कलत्रतनयद्वेषं करोत्यश्रियम् ।
नीचे तुङ्गनवांशके यदि महाराजप्रसादं सुखं
विद्याबुद्धियशोधनादिविभवं देशाधिपत्यं तु वा ॥१२०॥

*Sloka* 120. Jupiter occupying a depression Navamsa in its exaltation sign brings on during the progress of its dasa danger through robbers, foes and rulers, the hatred of wife and sons and bad luck generally; but when the planet is in the exaltation Navamsa in its depression sign, it secures during its dasa to the person concerned, royal favor, material comforts, learning, wisdom, fame, wealth and the influence which such things carry; and it may even be the lordship of the whole country.

शनेर्दशायामजगर्दभोष्ट्रवृद्धाङ्गनापक्षिकुधान्यलाभम् ।
श्रेणीपुरग्रामजनाधिकाराद् धनं वदेन्नीचकुलाधिपत्यम् ॥

*Sloka* 121. Astrologers declare that during the dasa of Saturn, a person may come into possession of goats, asses, camels, old women, birds and coarse grain and get wealth by the administration of a guild, township or village community and become the ruler of a low tribe.

*cf.* फलदीपिका

रवितनयदशायां राष्ट्रपीडाग्रहारप्रतिजनितविभूतिः प्रेष्यवृद्धाङ्गनाप्तिः ।
पशुमहिषवृषाप्तिः पुत्रदारप्रपीडा पवनकफगुदार्तिः पादहस्ताङ्गतापः ॥
पाकेऽर्कजस्य निजदारसुतादि रोगान् वातोत्तरं कृषिविलासमसत्प्रलापम् ।
कुस्त्रीरतिं परिजनैर्वियुतिं प्रवासमाकस्मिकं स्वजनभूमिसुखार्थनाशम् ॥

## ॥ शनिदशायामन्तर्दशाफलानि. ॥

क्लेशादिभिर्व्याधिनिपीडनं च मात्सर्यमानैर्बहुशोकतापम् ।
भूपालचोरैर्धनधान्यनाशं करोति मन्दः स्वदशापहारे ॥ १२२ ॥

*Sloka* 122. In its own dasa and bhukti, Saturn may bring on disease and suffering through the trouble and torment which the person under its influence is made to undergo; by exciting his envy and pride, it leads to much sorrow and mental anguish; by exposing him to the rapacity of kings and freebooters, it deprives him of his wealth and store of grain.

*cf.* फलदीपिका

कृषिवृद्धिभृत्यमहिषाभ्युदयः पवनामयोऽपलजातिधनम् ।
स्थविराङ्गनाप्तिरलसत्वमघो निजवत्सरान्तरगते रविजे ॥

रवितनयदशायां स्वापहारे विरोधं
नरपतिजनकोपं प्रेष्यवृद्धाङ्गनाप्तिम् ।
पशुगणविषभीतिं पुत्रदारादिपीडां
ज्वरपवनकफार्तिं शूलरोगं वदन्ति ॥ १२३ ॥

*Sloka* 123. In Saturn's dasa and bhukti, a person has to encounter opposition, incur the displeasure of the king's men, keep old servant-women, and be in dread of his cattle being poisoned; his wife and children have much suffering; himself being liable to fever, wind or phlegm ailments and to colic.

सुखवित्तयशोवृद्धिं सत्कर्माचारसम्पदः ।
कृषिवाणिज्यमाप्नोति बुधे मन्ददशान्तरे ॥ १२४ ॥

*Sloka* 124. Increase of happiness, wealth and fame, the benefits accruing from acts of piety and customary religious observances, agriculture and commerce, a person may expect to have in Mercury's interval in Saturn's dasa.

*cf.* फलदीपिका

सुभगत्वमस्ति सुखिता वनिता नृपलालनं विजयमित्रयुतिः ।
त्रिगदोद्भवः सहजपुत्ररुजा शनिदायहारिणि शशाङ्कसुते ॥

Also जातकाभरण

धनाङ्गनासूनुसुखोपपन्नः सद्राजमानेन विराजमानः ।
विद्वज्जनानन्दकरः कफार्त्तो मर्त्यो भवेज्ज्ञे शनिपाकसंस्थे ॥

वातपित्तकृतं रोगं कलहं नीचदुर्जनैः ।
दुःस्वप्नभयमाप्नोति केतौ मन्ददशान्तरे ॥ १२५ ॥

*Sloka* 125. Disease caused by wind and bile, quarrel with vile wicked people and dread of evil dreams, a

person becomes liable to, during Ketu's interval in Saturn's mahadasa.

*cf.* फलदीपिका

मन्दाग्निपीडनमरिव्यसनं सुतदारविग्रहमतिः सततम् ।
अशुभावलोकनमहेश्च भयं मृदुवत्सरं हरति केतुपतौ ॥

बन्धुस्नेहं जनप्रीतिं जायावित्तधनाप्तिम् ।
कृष्यादि सुखमाप्नोति भृगौ मन्ददशान्तरे ॥ १२६ ॥

*Sloka* 126. A person experiences the good will of relatives, the approbation of the people, accession of wives, property and wealth, and the joys arising from agriculture and kindred pursuits pending Sukra's interval in Sani-dasa.

*cf.* फलदीपिका

सुहृदङ्गनातनयसौख्ययुतः कृषितोययानजनितार्थचयः ।
शुभकीर्तिरुद्भवति देहभृतां यमदायहारिणि भृगोस्तनये ॥

Also जातकाभरण

योषाविभूषासुतसौख्यलब्धिः श्रीग्रामदेशाधिकृतत्वमुच्चैः ।
यशःप्रकाशोऽरिकुलस्य नाशः शनैर्दशायामुशनःप्रवेशे ॥

पुत्रदारविनाशं च नृपचोरादिपीडनम् ।
मनोमयमवाप्नोति भानौ मन्ददशान्तरे ॥ १२७ ॥

*Sloka* 127. Loss of wife and children, trouble from the king or robbers, and a sinking of the heart, a person has to experience, during the Sun's bhukti in Saturn's mahadasa.

*Cf.* फलदीपिका

मरणं तु वा रिपुभयं सततं गुरुवर्गरुक् जठरनेत्ररुजा ।
धनधान्यविच्युतिरिह प्रभवेद्रविनायुंराविशति तीनकरे ॥

Also जातकाभरण

धनाङ्गनानन्दनबन्धुपीडा गाढापि बाधात्मकलेवरे स्यात् ।
रिपूद्गमः सञ्चलनं नलिन्याः पत्यौ स्थिते मन्ददशान्तराले ॥

**गुरुस्त्रीमरणं दुःखं बन्धुद्वेषं धनागमम् ।**
**वातरोगमवाप्नोति चन्द्रे मन्ददशान्तरे ॥ १२८ ॥**

*Sloka* 128. Death of a revered matronly female, sorrow, dislike of relatives, coming in of money and wind disease may be expected during the Moon's bhukti in the dasa of Saturn.

*cf.* फलदीपिका

वनिताहृतिर्मरणमेवनृणां सुहृदां विपत्तिरथरोगभयम् ।
जलवातजं भयमतीवभवेद्विभायुरानिशाति रात्रिकरे ॥

Also जातकाभरण

नित्यं कलिर्बन्धुजनैर्वियोगो हृतिर्मृतिर्वाऽपि भवेद्गृहिण्याः ।
उत्साहसौख्योपहतिर्नितान्तं शीतद्युतौ मन्ददशान्तराले ॥

**स्थानच्युतिं महारोगं नानाविधमनोभयम् ।**
**सहोदरसुहृत्पीडां भौमे मन्ददशान्तरे ॥ १२९ ॥**

*Sloka* 129. Loss of place, serious illness, various apprehensions, distress of brothers and friends have to be looked for in Kuja's interval in Saturn's dasa.

*Cf.* फलदीपिका

स्वपदच्युतिस्वजनविग्रहरुग्ज्वरवह्निशस्त्रविषभीरथवा ।
अरिवृद्धिरारतरुगक्षिभयं रविनायुराविशति भूमिसुते ॥

Also जातकाभरण

स्वस्थानयानं विकलत्वमङ्गे धनाङ्गनासुतवियोजनं स्यात् ।
सन्मानहानिर्ननु सूर्यसूनोर्दशान्तरे भूमिसुतप्रचारे ॥

सर्वाङ्गरोगसन्तापं चोरारिनृपपीडनम् ।
धनच्छेदमवाप्नोति राहौ मन्ददशान्तरे ॥ १३० ॥

*Sloka* 130. The anguish of disease in every limb, the devastation wrought by robbers, foes and rapacious rulers, and the deprivation of wealth are what a person may have to suffer during Rahu's bhukti in the dasa of Saturn.

*cf.* फलदीपिका

अपमार्गयानमसुभिर्विरहं त्वयना प्रमेहगुरुगुल्मभयम् ।
ज्वरसुक्षितिस्सतममेव नृणामसितान्तरं विशति भोगिपतौ ॥

देवभूदेवभक्तिं च राजप्रीतिं महत्सुखम् ।
स्थानलाभमवाप्नोति गुरौ मन्ददशान्तरे ॥ १३१ ॥

*Sloka* 131. Devotion to Gods and Brahmanas, royal favor, great happiness and attainment of rank, a person will have, during Jupiter's bhukti in Saturn's dasa.

*cf.* फलदीपिका

अमरार्चनद्विजगणाभिरुचिर्गृहपुत्रदारविहृतिस्तु भवेत् ।
धनधान्यवृद्धिरधिका हि नृणां गतवत्यथार्किवयसीन्द्रगुरौ ॥

Also जातकाभरण

कलाकलापे कुशलो विलासी पद्मालयालङ्कृतचारुशीलः ।
भूपालभूलाभयुतो नरः स्याद् बृहस्पतौ मन्ददशा मगाते ॥

स्वोच्चे नीचनवांशगो रविसुतः कुर्वीत सौख्यं फलं
पाकादौ तु दशावसानसमये कष्टं फलं प्राणिनाम् ।
तुङ्गांशोपगतः स्वनीचभवने पाकावसाने सुखं
दायादौ रिपुचोरभीतिमधिकं दुःखं विदेशाटनम् ॥ १३२ ॥

*Sloka* 132. Saturn occupying the depression Navamsa in its exaltation house produces happiness at the commencement of its dasa, but towards the end, it is

fraught with woe to the creatures concerned. If the planet occupy the exaltation Navamsa in its depression house, the end of the dasa is happy while in the initial portion there may be evil to be feared from robbers and enemies, much misery and roaming in foreign lands.

स्वकीयदाये गुरुबन्धुमित्रैरर्थार्जनं कीर्तिसुखं करोति ।
दौत्यं च सत्कर्म हिरण्यपण्यैर्धनाप्तिं वातरुजं कुमारः ॥१३३॥

*Sloka* 133. During the period that Mercury's influence takes effect, a person will earn money through the instrumentality of reverend seniors, relatives and friends; he will have fame and happiness; he will go on an embassy, derive an income by dealing in gold ware and suffer from wind ailment.

*cf.* फलदीपिका

शशितनयदशायां शश्वदाचार्यबन्धुद्विजजनितधनाप्तिः क्षेत्रगोवाजिलाभः ।
मनुवरसुरपूजावित्तसङ्घातसिद्धिः प्रभवति मरुदुष्णश्लेष्मरोगप्रपीडा ॥
सौम्यः करोति सुहृदागममात्मसौख्यं विद्वत्प्रशंसितयशश्च गुरुप्रसादम् ।
प्रागल्भ्यमुक्तिविषयेऽपि परोपकारं न्यायात्मनादिसुहृदां कुशलं महत्त्वम् ॥

## ॥ बुधदशायामन्तर्दशाफलानि ॥

विचित्रगृहवस्त्राप्तिं द्विजबन्धुवशाद्धनम् ।
सर्वकार्यार्थसंसिद्धिं सौम्ये सौम्यदशान्तरे ॥ १३४ ॥

*Sloka* 134. Acquisition of beautiful houses and apparel, money through Brahmanas and relatives and success in every undertaking may be looked for in Mercury's bhukti in its own mahadasa.

*cf.* फलदीपिका

धर्ममार्गनिरतिर्विपश्चितां सङ्गमो विपुलधीधनद्विजात ।
विद्यया बहुयशः सुखं सदा चन्द्रजे हरति वत्सरं स्वकम् ॥

बन्धुपीडा मनस्तापं सौख्यहानिमरेर्भयम् ।
कार्यनाशमवाप्नोति केतौ सौम्यदशान्तरे ॥ १३५ ॥

*Sloka* 135. Trouble from relatives, mental agony, loss of comfort, dread of an enemy and failure in business are to be expected during Ketu's interval in Budha dasa.

*cf.* फलदीपिका

दुःखशोककलहाकुलात्मता गात्रकम्पनममित्रसंयुतिः ।
क्षेत्रियान्वयियुतिर्यदा भवेत् सोमसूनुशरदं गतः शिखी ॥

गुरुदेवाग्निविप्रेषु दानं धर्मप्रियं तपः ।
धनवस्त्रविभूषाप्तिं शुक्रे सौम्यदशान्तरे ॥ १३६ ॥

*Sloka* 136. Offering of acceptable presents to reverend seniors, gods, fire and the Brahmanas, observance *of duty conformable to religion and morality*, acquisition of wealth, clothing and ornaments will mark Sukra's interval in the dasa of Mercury.

*cf.* फलदीपिका

देवविप्रगुरुपूजनक्रिया दानधर्मपरतासमागमः ।
वस्त्रभूषणसुहृद्युतिर्भवेत् बोधनायुषि समाहृते सिते ॥

Also जातकाभरण

विबुधसाधुजनातिथिसादरः सुकृतकर्मसमुत्सुकमानसः ।
विविधवस्त्रविभूषणभाङ्नरो बुधदशान्तरगे सति भार्गवे ॥
नानाप्रयासैश्च निरोधनैर्वा शिरोरुजा वाऽपि शरीरभाजाम् ।
करोति बाधां विबुधान्तराले सितः प्रयातः प्रवदन्ति केचित् ॥

वस्त्रभूषणवित्ताप्तिं राजप्रीतिं महत्सुखम् ।
धर्मश्रवणमाप्नोति रवौ बुधदशान्तरे ॥ १३७ ॥

*Sloka* 137. Acquisition of apparel, ornaments and wealth, royal favor, great ease, and hearing of moral

homilies may be expected in the Sun's bhukti in Budha dasa.

*cf.* फलदीपिका

हेमविद्रुमतुरङ्गवारणप्रावृतं भवनमन्नपानयुक् ।
भूपतेरपि च पूजनं भवेत् भानुमालिनि बुधान्दकाहृते ॥

Also जातकाभरण

तुरङ्गहेम्नां च सुविद्रुमणां सदम्बराणामपि वारणानाम् ।
भवेद्धवाप्तिर्बहुवैभवानां सौम्यस्य पाके तपने प्रपन्ने ॥
स्वस्थानतः संचलनं कदाचिद् गदप्रकोपात्प्रजनन्मवित्तम् ।
धर्मे प्रवृत्तिं कुरुते ज्ञपाके पङ्केरुहेशः प्रवदन्ति केचित् ॥

**रोगारातिजनद्वेषं सर्वकार्यार्थनाशनम् ।**
**चतुष्पाद्भयमाप्नोति चन्द्रे सौम्यदशान्तरे ॥ १३८ ॥**

*Sloka* 138. Diseases, ill-will of enemies, miscarriage of every concern, risk from quadrupeds await a person during the Moon's interval in Budha dasa.

*Cf.* फलदीपिका

मस्तकव्यसनमक्षिपीडनं कुष्ठदद्रुबहुकण्ठपीडनम् ।
प्राणसंशययुतिर्नृणां भवेत् ज्ञायुषे बनति शीतदीधितौ ॥

Also जातकाभरण

पामादिनानामयसंभवः स्यान्मृतप्रभासंभननं विवादः ।
पित्तप्रकोपः खलु यानपीडा यदा जडांशुर्ज्ञदशां प्रपन्नः ॥

**रोगारिभयनाशं च पुण्यकर्मफलं यशः ।**
**राजश्रीविभवाप्नोति कुजे सौम्यदशान्तरे ॥ १३९**

*Sloka* 139. Disappearance of all danger from diseases or enemies, fame derived from acts of charity and beneficence, and royal favor accrue to a person during Kuja's bhukti in Budha dasa.

*Cf.* फलदीपिका

अग्निमीतिरपि नेत्रजा रुजा चोरतो भयमतीव दुःखिता ।
स्थानहानिरथ वातरोगता ह्यायुषं हरति मेदिनीसुते ॥

Also जातकाभरण

गुह्यामयार्यव्यसनसंयुतः स्यात् कान्तासुतप्रीतिविमुक्तचित्तः ।
विलुप्तधर्मो मनुजः प्रविष्टे बुधस्य मध्ये वसुधातनूजे ॥

मित्रबन्धुधनप्राप्तिं सुखविद्याविभूषणम् ।
राजप्रीतिमवाप्नोति राहौ सौम्यदशान्तरे ॥ १४० ॥

*Sloka* 140. During Rahu's bhukti in Budha dasa, a person gets wealth from friends and relatives and secures to himself happiness, learning, ornaments and royal favor.

*cf.* फलदीपिका

मानहानिरथवाश्रयच्युतिः स्वर्णतोऽग्निविपतोयजं भयम् ।
मस्तकाक्षिजठरप्रपीडनं शीतरश्मिजदशां गतेऽसुरे ॥

इष्टबन्धुगुरुद्वेषं धनलाभं सुतायतिम् ।
रोगादिभयमाप्नोति गुरौ सौम्यदशान्तरे ॥ १४१ ॥

*Sloka* 141. When Jupiter has its bhukti in Budha dasa, a person will incur the hatred of friends, relatives and elders; will have additions to wealth and children, and will be liable to risk from diseases and the like.

*cf.* फलदीपिका

व्याधिशत्रुभयविच्युतिर्भवेत् मन्त्रसिद्धिरवनीशसत्कृतिः ।
धर्मसिद्धितपसां समुद्भवो देवमन्त्रिणि विदो दशां गते ॥

Also जातकाभरण

कान्तासुतानन्दयुतोऽरिहन्ता सत्कर्मकृच्छास्त्रमतिर्विनीतः ।
मन्त्री नरः स्यात् पितृमातृदुःखी बृहस्पतौ सौम्यदशां प्रयाते ॥

धर्मसत्कर्मवित्ताप्तिं सुखमल्पजनाधिपैः ।
कृष्यादिनाशमाप्नोति शनौ सौम्यदशान्तरे ॥ १४२ ॥

*Sloka* 142. Acts of charity and beneficence, acquisition of wealth, material comforts secured through the instrumentality of petty chiefs, loss in agriculture and the like will mark Saturn's bhukti in Budha dasa.

*cf.* फलदीपिका

अर्थधर्मपरिलुप्तिरुच्चकैः सर्वकार्यविफलत्वमङ्गिनाम् ।
श्लेष्मवातजनितो रुगुद्भवो शोचनाद्यपि समाहृतेऽसिते ॥

Also जातकाभरण

सत्कर्मधर्मद्रविणाप्तिसम्पा कन्दर्पहीनो मनुजः प्रतापी ।
वातामयार्तोऽतिमृदुस्वभावः सौम्यान्तराले नलिनीशसूनौ ॥

उच्चराशिगतः सौम्यो नीचांशकसमन्वितः ।
करोति कर्मवैकल्यं निजदाये च निर्धनम् ॥ १४३ ॥

*Sloka* 143. Mercury occupying the depression Navamsa in its exaltation sign, produces incompetency for work in the person concerned and makes him indigent in its dasa.

नीचस्थानगतश्चान्द्रिस्तुङ्गांशकसमन्वितः ।
पाकादौ विफलं सर्वं शुभमन्ते प्रयच्छति ॥ १४४ ॥

*Sloka* 144 Mercury in depression but in the exaltation Navamsa ordains prosperity in the end of its dasa though in the beginning thereof all be barren of effect.

दीनो नरो भवति बुद्धिविवेकनष्टो
नानामयाकुलविवर्द्धितदेहतापः ।
पापादिशुद्धिरतिकष्टचरित्रयुक्तः
किञ्चित्सुखी च शिखिनः परिपाककाले ॥ १४५ ॥

*Sloka* 145. At the time Ketu's influence begins to ripen and yield fruit, a person feels distressed; his sense and judgment fail; he becomes afflicted with various diseases; his physical torments grow; his evil acts multiply; his life is one of great misery. His comforts, if any, are but slight.

*cf.* फलदीपिका

केतोर्दशायामरिचोरभूपैः पीडां च शस्त्रक्षतिमुष्णरोगम् ।
मिथ्यापवादं कुलदूषितत्वं बह्निर्भयं प्रोषणमात्मदेशात् ॥

शिखिजनितदशायां शोकमोहोऽङ्गनाभिः प्रभुजनपरिपीडा वित्तनाशोपराधः ।
प्रभवति तनुभाजां प्रोषणं स्वीयदेशाद् दशनचरणरोगश्लेष्मसंभावनं च ॥

## ॥ केतुदशायामन्तर्दशाफलानि ॥

कलत्रपुत्रमरणं सुखवित्तविनाशनम् ।
रिपुभीतिमवाप्नोति केतौ केतुदशान्तरे ॥ १४६ ॥

*Sloka* 146. When Ketu has its interval in its own dasa, a person has to apprehend the death of his wife and children, loss of happiness and wealth and evil from his enemies.

*cf.* फलदीपिका

रिपुजनकलहं सुहृद्विरोधस्त्वशुभवचः श्रवणं ज्वराद्ग्रहम् ।
गमनमपरभाक्षि वित्तनाशं शिखिनि स्वेन दशां गते स्वकीयाम् ॥

स्त्रीपुत्ररोगकलहं बन्धुमित्रादिनाशनम् ।
ज्वरातिसारमाप्नोति शुक्रे केतुदशान्तरे ॥ १४७ ॥

*Sloka* 147. Illness of wife and children, quarrels, loss of *relatives* and *friends*, *fever* and dysentery are what one should be prepared for in Sukra's bhukti in Ketu dasa.

*Cf.* फलदीपिका

द्विजनरकलहं स्त्रियाविरोधं सुकुलजनैरपि कन्यकाप्रसूतिः ।
परिभवजननं परोपतापो भवति सिते शिखिवत्सरान्तराख्ये ॥

मनोभङ्गं शरीरार्तिं विदेशगमनं भयम् ।
सर्वकार्यविरोधं च रवौ केतुदशान्तरे ॥ १४८ ॥

*Sloka* 148. Disappointment, physical pain, exile in a foreign country, peril and obstruction in every business are likely to crop up during the Sun's interval in Ketu's dasa.

*cf.* फलदीपिका

गुरुजनमरणं ज्वरावतारस्वजनविरोधविदेशयानलाभम् ।
नृपकृषिकलहं कफानिलार्तिर्विशति रवौ शिखिवत्सरानुयाते ॥

दारपुत्रजनालस्यं धनधान्यविनाशनम् ।
मनस्तापमवाप्नोति चन्द्रे केतुदशान्तरे ॥ १४९ ॥

*Sloka.* 149. *Ennui* affecting wife, children and attendants, destruction of wealth and corn, and distress of mind are to be looked for in the Moon's bhukti in Ketu dasa.

*cf.* फलदीपिका

सुलभबहुधनं तथैव हानिः सुतविरहो बहुदुःखभाक् प्रसूतिः ।
परिजनयुवतिप्रजाप्रलाभः शशिनि यदा शिखिदायमभ्युपेते ॥

पुत्रदारानुजद्वेषं रोगारिनृपपीडनम् ।
बन्धुनाशमवाप्नोति कुजे केतुदशान्तरे ॥ १५० ॥

*Sloka* 150. During Kuja's bhukti in Ketu dasa, a person has to incur the odium of his sons, wife and younger brothers, to suffer pain from diseases, foes and bad rulers, and to lose some relatives.

cf फलदीपिका

सकुलजनकलहस्वबन्धुनाशो भयमपि पन्नगज वदन्ति चोरात् ।
हुतवहभयराजुपीडन च व्रजति कुजे च्यजनामखेचराप्तु ॥

राजचोरभय दुःखं सर्वकार्यविनाशनम् ।
दुष्टमानवसंवादं राहौ केतुदशान्तरे ॥ १५१ ॥

*Sloka* 151 Fear of kings and robbers, sorrow, ruin of every business and altercation with bad people are to be expected in Rahu s bhukti in Ketu dasa.

cf. फलदीपिका

अरिगतकलहोनृपाग्निचोरैर्भयमपि पन्नगज वदन्ति तद्वा ।
खलजनवचन दुरितचेष्टा तमसि गतऽत्र शिखीन्द्रदायमाहु ॥

देवद्विजगुरुप्रीतिं राजस्नेहं निरामयम् ।
भूपुत्रलाभमाप्नोति गुरौ केतुदशान्तरे ॥ १५२ ॥

*Sloka* 152 Approbation of Gods Brahmanas and elders, king s good will, exemption from ailments and acquisition of lands and children may be looked for in Jupiter s bhukti in Ketu s dasa

Cf. फलदीपिका

सुतवरजनन सुरेन्द्रपूजा धरणिधनाप्तिरलायनार्थसिद्धि ।
धनचयनजन महीशमानो भवति गतेऽत्र गुरौ शिखीन्द्रदायम ॥

मनोमयं मनस्तापं स्वबन्धुजननिग्रहम् ।
देशत्यागमवाप्नोति शनौ केतुदशान्तरे ॥ १५३ ॥

*Sloka* 153 Misgiving in the heart mental anguish difference with kith and kin and the abandonment of native country will mark Saturn s interval in Ketu dasa.

cf फलदीपिका

परिजनविहति परोपताप रिपुजननिग्रहमङ्गभङ्गतां च ।
धनपदविधुतिं तथाङ्गरार्या गमयति सूर्यसुत शिखिवराप्तु ॥

चन्धुमित्रादिसंयोगं पुत्रदारधनागमम् ।
विद्यासुखमवाप्नोति बुधे केतुदशान्तरे ॥ १५४ ॥

*Sloka* 154. The society of relatives, friends and the like, accession of wealth to sons and wife, and happiness derivable from knowledge accrue in Mercury's bhukti in Ketu dasa.

*cf.* फलदीपिका

सुतवरजननं प्रभुप्रशस्तिः क्षितिधनसिद्धिररीश्वरप्रपीडा ।
पशुकृषिविहतिर्भवेत्तु पुंसां विशति बुधे शिखिवत्सरान्तरालम् ॥

शुभग्रहयुतः केतुः स्वदशायां सुखप्रदः ।
यदि शोभनसंदृष्टः करोति विपुलं धनम् ॥ १५५ ॥

*Sloka* 155. Ketu associated with a benefic planet yields happiness in its dasa. If aspected by a benefic planet, it leads to the acquisition of abundant wealth.

सपापः कुरुते केतुः स्वपाके दुष्टमानवैः ।
भीतिं कृत्रिमरोगाद्यैर्व्यसनं धननाशनम् ॥ १५६ ॥

*Sloka* 156. When associated with malefic planets, Ketu produces danger through the instrumentality of wicked men and misery through acquired diseases leading to waste of wealth.

दशादौ गुरुबन्ध्वार्तिं दशामध्ये धनाप्तिम् ।
दशान्ते सुखमाप्नोति केतोर्दायफलं त्रिधा ॥ १५७ ॥

*Sloka* 157. Three-fold is the effect of Ketu's dasa. At the beginning of it, elders and relations are taken ill; in the middle of it, there is money coming in; at the end there is happiness.

स्त्रीपुत्रवित्ताप्तिमतीव सौख्यं सुगन्धमाल्याम्बरभूषणाप्तिम् ।
यानादिभाग्यं नरपालतुल्यं यशः स्वपाके भृगुजः करोति १५८

*Sloka* 158. Venus in its dasa leads to the acquisition of wife, children, wealth, exceeding comfort, fragrant wreaths, apparel, ornaments, vehicles and other means of locomotion, fortune and fame equal to a king's.

*cf.* फलदीपिका

क्रीडासुखोपकरणान्वितवाहनाप्ति गोरत्नभूषणनिधिप्रमदाप्रमोदम् ।
ज्ञानक्रियासलिलयानमुपैति शौक्र्यां कल्याणकर्मबहुमानमिलाधिनाथात् ॥
भृगुतनयदशायामङ्गनारत्नवस्त्रद्युतिनिधिधनभूषावाजिशय्यासनाप्तिः ।
क्रयकृषिजलयानप्राप्तवित्तागमो वा भवति गुरुवियोगो बान्धवार्तिर्मनोरुक् ॥

## ॥ शुक्रदशायामन्तर्दशाफलानि ॥

शङ्खास्त्रीधनवस्त्राप्तिं धर्मादिसुखसम्पदः ।
रिपुनाशं यशोलाभं शुक्रे शुक्रदशान्तरे ॥ १५९ ॥

*Sloka* 159. Acquisition of conches, females, wealth and apparel, good work and other such means of securing perfect happiness, disappearance of enemies and attainment of fame will mark Sukra's bhukti in its mahadasa.

*cf.* फलदीपिका

वसनभूषणवाहनचन्दनाद्यनुभवः प्रमदासुखसम्पदः ।
द्युतिधृतिः क्षितिपाद्धनलब्धयो भृगुसुते स्वदशां प्रविशत्यपि ॥

शिरोदराक्षिरोगं च कृषिगोवित्तनाशनम् ।
नृपक्रोधमवाप्नोति रवौ शुक्रदशान्तरे ॥ १६० ॥

*Sloka* 160. In the Sun's bhukti in the dasa of Venus, a person becomes liable to diseases affecting the head, the belly and the eyes; he sustains damage in respect to agriculture, cattle and property and incurs the displeasure of the rulers.

*cf.* फलदीपिका

नयनकुक्षिकपोलगदोद्भवः क्षितिभृतो भयमस्ति शरीरिणाम् ।
गुरुकुलोद्भवबान्धवपीडनं भृगुसुतायुषि भानुमति स्थिते ॥

Also जातकाभरण

भूपभीतिरपि बन्धुनिर्मिते वित्तनाशनमरात्युदयः स्यात् ।
क्रोडगण्डनयनेष्वपि पीडा भार्गवे यदि रवेर्विनिवेशः ॥

**शिरोष्णरोगसन्तापं कामादि रिपुपीडनम् ।**
**किञ्चित्सुखमवाप्नोति चन्द्रे शुक्रदशान्तरे ॥ १६१ ॥**

*Sloka* 161. When the Moon has its interavl in the dasa of Venus, a person suffers much pain from a disease due to an inflammation in the nervous tissues and from lust and other evil passions of human nature and whatever ease he can feel under the circumstances must be small or slight.

फलदीपिकायाम्

नखशिरोरदनक्षतिरुग्वैकैर्मलनपित्तरुगर्थविनाशनम् ।
ग्रहणिगुल्मकफास्मनिपीडनं सितवयोहृति तत्र हिमत्विषि ॥

Also जातकाभरण

शीर्षदन्तनखपीडनमुख्यैः कामलप्रबलता किल पित्तम् ।
श्वापदादपि भयं च नराणां भार्गवान्तरगते हिमरश्मौ ॥
भूदेवदेवाभिमनःप्रवृत्ती रणाङ्गणे स्याद्विजयो नराणाम् ।
मातङ्गकार्याद्वनिताश्रयाद्वा लाभः सिते चन्द्रदशेति केचित् ॥

**पित्तस्रावाक्षिरोगं च महोत्साहं धनागमम् ।**
**दारभूलाभमाप्नोति कुजे शुक्रदशान्तरे ॥ १६२ ॥**

*Sloka* 162. Flow of bile, disease of the eyes, great exertion, coming in of money, acquisition of wives and lands are to be expected in Kuja's bhukti in the dasa of Venus.

NOTES.

"पित्तासृगक्षि रोगं च" (Pitthasrigakshi rogam cha) is another reading.

*Cf.* फलदीपिका

रुधिरपित्तगदार्तिसमाश्रयः कनकताम्रचयावनिसद्ग्रहः ।
युवतिदूषणमुद्यमविच्युतिर्नृपभवल्लभवत्सरगे कुजे ॥

Also जातकाभरण

पित्तात्क्षताद्रक्तविकारतो वा वैकल्यमङ्गे प्रभवेन्नराणाम् ।
उत्साहहीनत्वमतीव याते भूमीसुते दैत्यगुरोर्दशायाम्
सन्माननानाविधवस्तुसौख्यं भूमीपतेः स्यात् खलु भूमिलाभः ।
अङ्गारके भार्गवपाकसंस्थे केषांचिदेवं मतमस्ति शास्त्रम् ॥

नीलवस्तुधनप्राप्तिं बन्धुद्वेषं सुहृद्भयम् ।
अग्निबाधामवाप्नोति राहौ शुक्रदशान्तरे ॥ १६३ ॥

*Sloka* 163. Acquisition of black substances forming a valuable property, dislike of relatives, evil from friends, and injury by fire may be expected in Rahu's bhukti in the mahadasa of Venus.

*cf.* फलदीपिका

निधिभवः सुतलब्धिरभीष्टवाक् स्वजनपूजनमप्यरिबन्धनम् ।
दहनचोरविपोद्भवपीडनं कुलभरेश्वरवत्सरगेऽसुरे ॥

धनवस्त्रविभूषाप्तिं धर्माचारं सुखावहम् ।
स्त्रीसुतार्तिं च वैषम्यं गुरौ शुक्रदशान्तरे ॥ १६४ ॥

*Sloka* 164. During the bhukti of Jupiter in Sukra's mahadasa, a person gets wealth, apparel and ornaments, performs his religious duties leading him to ultimate happiness; his wife and children may fall ill and there may be distress in consequence.

135

*cf.* फलदीपिका

विविधधर्मसुरेशनमस्क्रिया भवति चात्मजवामदृगागमः ।
विविधराज्यसुखं च शरीरिणां कविदशाहृति कार्मुकनायके ॥

Also जातकाभरण

यज्ञादिसत्कर्मणि सादरत्वं गतार्थसिद्धिः सुतदारसौख्यम् ।
महापदानेकविभूषणाप्तिर्भृगोर्दशायां चरतीन्द्रवन्द्ये ॥

वृद्धस्त्रीजनसंभोगं गृहक्षेत्रधनागमम् ।
शत्रुनाशमवाप्नोति मन्दे शुक्रदशान्तरे ॥ १६५ ॥

*Sloka* 165. *Liaison* with females that are past their prime, accession of houses, lands and wealth and the disappearance of enemies will mark Saturn's bhukti in Sukradasa

*Cf.* फलदीपिका

नगरयोधनृपोद्भवपूजनं प्रवरयोषिदवाप्तिरथास्ति वा ।
विविधवित्तपरिच्छदसंयुतिः दितिजपूजितदायगते शनौ ॥

Also जातकाभरण

मित्रोचतिर्ग्रामपुराधिपत्यं वृद्धाङ्गनाकेलिरतीव नित्यम् ।
स्याद्वैरिनाशो भृगुजो दशायां शनैश्चरस्यान्तरगा दशा चेत् ॥

सुतमित्रसुखार्थाप्तिं नृपप्रीतिं महत्सुखम् ।
शुभमारोग्यमाप्नोति बुधे शुक्रदशान्तरे ॥ १६६ ॥

*Sloka* 166. During Mercury's interval in the dasa of Venus a person secures the comfort of his sons, friends, wealth, royal favor, happiness on a large scale, prosperity and sound health.

*cf.* फलदीपिका

तनयसौख्यसमागमसम्पदो निचयलब्धिरतिप्रभुता यशः ।
पवनवित्तककारितरिञ्चुतिर्द्विजमनन्त्रिदशाहृति चन्द्रजे ॥

Also जातकाभरण

वृत्तैः फलैश्चापि चतुष्पदाद्यैर्वित्तं भवेत्सख्यनिधिर्नृपेण ।
दुरन्तकार्याभिरतिर्नितान्तं भृगोर्दशायां चरतीन्दुसूनौ ॥

कलहं बन्धुनाशं च शत्रुपीडा मनोभयम् ।
धनच्छेदमवाप्नोति केतौ शुक्रदशान्तरे ॥ १६७ ॥

*Sloka* 167. Discord, death of relatives, injury inflicted by enemies, misgiving in the heart and deprivation of wealth are what a person should be prepared for in Ketu's bhukti in the mahadasa of Venus.

*cf.* फलदीपिका

सुतसुखादिविहीनमुनिरशिनं भयमतीव विनाशनमन्तकृत् ।
अपि च बान्धवजनसंयुनिः शिखिनि यात्यशुभौशनसीं दशाम् ॥

उच्चराशिगतः शुक्रो नीचांशकसमन्वितः ।
स्वपाके धननाशं च कुर्वीत पदविच्युतिम् ॥ १६८ ॥

*Sloka* 168. Venus in its exaltation sign but in the depression Navamsa causes loss of wealth and loss of status in its dasa.

भार्गवो नीचराशिस्थः स्वोच्चांशकसमन्वितः ।
स्वदाये कृषिवाणिज्यं धनलाभं प्रयच्छति ॥ १६९ ॥

*Sloka* 169. Venus in its depression sign but in the exaltation Navamsa gives to the person concerned during the ripening of its dasa, (success in) agriculture and trade and accession to his wealth.

सम्पन्नबलिनः स्वतुङ्गभागे सम्पूर्णा बलवर्जितस्य रिक्ता ।
नीचांशगतस्य शत्रुभागे ज्ञेयानिष्टदशा फलप्रदात्री ॥ १७० ॥

*Sloka* 170. As regards the crop of fruit borne, the dasa of a planet having full strength or in its exaltation is termed full or complete; that of a planet without strength is termed empty. The dasa of a planet in a depression or inimical Navamsa is to be understood as untoward.

NOTES.

This sloka is from Brihat Jataka. प्रसूति (Prasuti) means Radix position; Chart at birth time. संपूर्णा (Sampurna) is the name given to a dasa of the planet which is in exaltation and is well-placed too.

*cf.* गार्गिः

सर्वैर्बलैरुपेतस्य परमोच्चगतस्य च ।
सम्पूर्णाख्या दशा ज्ञेया धनारोग्यविवर्धिनी ॥
सर्वैर्बलैर्विहीनस्य नीचराशिगतस्य च ।
रिक्ता नाम दशा ज्ञेया धनारोग्यविनाशिनी ॥
स्वोच्चराशिगतस्यापि किंचिद्बलयुतस्य च ।
पूर्णा नाम दशा ज्ञेया धनवृद्धिकरी शुभा ॥
यः स्यात्परमनीचस्थस्तथा चारिनवांशके ।
तस्यानिष्टफला नाम व्याध्यनर्थविवर्धिनी ॥

Also गुणाकर

तुङ्गस्वराश्यंशसुहृद्गृहांशस्थितस्फुरत्कान्तिवरा ग्रहेन्द्राः ।
श्रेष्ठां दशां सद्गुहदृष्टयुक्ताः कुर्वन्ति कष्टं पुनरन्यथामी ॥
शस्तक्षेत्रे शत्रुनीचांशगस्य मिश्रा रिक्ता वीर्यमुक्तस्य सा हि ।
वीर्योपेतस्योच्चभागेषु पूर्णा नीचस्थस्य द्वेषि भागेत्वनिष्टा ॥

Also सारावली

स्वोच्चस्वराशिनिजभागसुहृद्गृहस्थाः
संपूर्णवीर्यरुचिरा बलिनः स्वकाले ।

मित्रोच्चभागसहिताः शुभदृष्टियुक्ताः
श्रेष्ठां दशां निदधति स्ववयःसु खेटाः ॥
नीचशत्रुगृहं प्राप्ताः शत्रुनिम्नांशसूर्यगाः ।
विवर्णाः पापसंबन्धा दशां कुर्युरशोभनाम् ॥

तत्तद्भावार्थकामेशदशास्वन्तर्दशासु च ।
तत्तद्भावविनाशः स्यात् तद्युक्तेक्षितकारकैः ॥ १७१ ॥

*Sloka* 171. In the main dasa as well as in the subsidiary dasa of the lord of the 2nd or the 7th place from any bhava, there will happen the destruction thereof by (1) the planet occupying the bhava; (2) the one aspecting it; or (3) the भावकारक (bhava-karaka) representing it

NOTES.

*Vide* also Adhyaya V, Sl. 50, *supra*.

त्रिकोणधनलाभस्था बलिनो यदि शोभनाः ।
स्वदशान्तर्दशाकाले कुर्वन्ति विपुलं सुखम् ॥ १७२ ॥

*Sloka* 172. If benefic planets occupying a Trikona, the 2nd and the 11th bhavas be strong, they produce much happiness in their dasas and antardasas.

अष्टादशाध्यायिनि सर्वहोरासमुद्भवे जातकपारिजाते ।
राशिस्वरूपादि दशाफलान्तं प्रोक्तं मया भानुमुखप्रसादात् ॥

इति श्रीनवग्रहकृपया वैद्यनाथविरचिते जातकपारि-
जातेऽष्टादशोऽध्यायः ॥

*Sloka* 173. In Jatakaparijata of which the matter has been culled from every astrological work and which

consists of 18 Adhyayas, the whole subject of astrology beginning with the nature of the zodiacal signs and ending with the fruit of the dasas or planetary periods has been treated by me under the auspices of the Sun and other planets.

Thus ends &c.

---

## COLOPHON.

शाखाभिरष्टादशसंख्यकाभिरध्यायरूपाभिरतिप्रकाशः ।
ज्योतिर्मयः सर्वफलप्रधानः संकीर्तितो जातकपारिजातः ॥

*Sloka* 174. Conspicuous with its eighteen branches in the form of adhyayas full of bright blooming stars and displaying mainly all the fruits they bear, the celestial tree of horoscopes जातकपारिजात (Jataka Parijata) has been fully described.

उक्तं राशिगुणालयं ग्रहगतिस्थानस्वभावाकृतिः
आधानादि समस्तजीवजननं बालाद्यनिष्टाकरः ।
आयुर्जातकभङ्गयोगजविधिः श्रीराजयोगादिजं
द्वित्र्यादिग्रहयोगजः शुभकरो मान्द्यब्दजं च क्रमात् १७५

पश्चादष्टकवर्गबिन्दुगणितं होराधनस्थानजं
दुश्चिक्यावनिभावजं सुतरिपुस्थानप्रयुक्तं फलम् ।
कन्दर्पाष्टमधर्मराशिजनितं व्यापारलाभान्त्यजं
नारीजातकलक्षणं निगदितं चान्द्रं दशान्तर्दशा ॥ १७६ ॥

*Slokas* 175-176. The nature and the quarter of the zodiacal signs; (2) the motions of the planets, their place, their character and forms; (3) the conception and other processes involved in the birth of every creature; (4) the numerous ills that overtake children and young people in a state of adolescence; (5) the length of life; (6) the rule regarding planetary conjunctions that mar the fortunes of the horoscopes in which they occur; (7) king-making yogas; (8) beneficial combinations of two, three or more planets; (9) the effects of Mandi, year, etc, in their order; (10) next in order the Ashtakavarga and the reckoning of benefic dots; (11) the effects of the 1st and the 2nd bhavas; (12) of the 3rd and the 4th; (13) of the 5th and the 6th; (14) of the 7th, the 8th and the 9th; (15) of the 10th, the 11th and the 12th; (16) the horoscopes of women; (17) what relates to the Moon's place at birth and (18) the dasas and their subdivisions—these have been treated of in the work.

श्रीविद्याधिकवेङ्कटाद्रितनयः श्रीवैद्यनाथः सुधीः
आदित्यादि समस्तखेटकृपया विद्वज्जनप्रीतये ।
होरासिन्धुसमुद्धृतामृतमयीमष्टादशाध्यायिनीं
चक्रे जातकपारिजातसरणिं गीतोत्सुकश्लोकिनीम् ॥ १७७ ॥

*Sloka* 177. The talented and illustrious Vaidyanatha, the son of the illustrious Venkatadri, so eminent for his learning and knowledge has been able, under the kind auspices of the Sun and other planets, to compose this guide to astrology, Jatakaparijata in 18 adhyayas embodying all that is essential *i. e.* the very nectar raised,

from the ocean of horary science, the author has been able to compose this work in lyrical metres so as to win the admiration of the learned world.

॥ इति श्रीजातकपारिजातः समाप्तः ॥

॥ श्रीसाम्बसदाशिवाय नमः ॥

---



B

H

K

M

——:o:——

## प (127)

भ (72)

# जातकपारिजाते मुख्यविषयपदानामकारादिकोशः

N. B.—The Roman and Arabic numerals opposite to each word refer respectively to the Adhyaya to which it belongs and to the number of the Sloka therein.

अ

# जातकपारिजाते मुख्यविषयपदानामकारादिकोशः

N. B.—The Roman and Arabic numerals opposite to each word refer respectively to the Adhyaya to which it belongs and to the number of the Sloka therein.

अ